अ०

वरविषयिणी प्रार्थना च, सर्वलक्षणसंयुक्तभगवत्स्वरूपदर्शनानन्तरं कण्डुकृतं भगवत्स्तवनम्, कण्डुं प्रति विष्णुवरप्रदानम्, भगवन्निदेशमनुसृत्य परमात्मध्यानं कुर्वतः कण्डोर्मोक्षः, कण्ड्वाख्यायिकापठनश्रवणफलकथनम्, पुरुषोत्तमाख्यक्षेत्रमाहिमवर्णनम् ... ... ... ... ... ... १७८

नानाविधोक्तिभिरनन्तभगवद्वतारस्तवगर्भितः श्रीकृष्णावतारविषयको बादरायणं प्रति संशयाविष्टानां मुनीनां प्रश्नः ... ... ... ... ... १७९

**कृष्णचरितारम्भः,** मुनिप्रश्नश्रवणकुतूहलाविष्टान्तःकरणश्रीव्यासकृतभगवत्स्तववर्णनम्, नानावतारवर्णनम्, चतुर्व्यूहकथनम् ... ... ... १८०

अवतारप्रयोजनवर्णनम्, भूरिभारावपीडितमह्या ब्रह्मान्तिके गमनम्, ब्रह्माणं प्रति स्वदुःखनिवेदनम्, भगवत्प्रशंसागर्भितो देवान्प्रति ब्रह्मणः संवादः, ब्रह्मकृता विष्णुस्तुतिः, स्तुतिश्रवणोत्तरं ब्रह्माणं प्रति विष्णुकृतसितकृष्णकेशद्वयदानकथनम्, देवान्प्रति विष्णुप्रतिपादितकेशद्वयदानाभिप्रायकथनम्, विष्णुसाहाय्यार्थमिन्द्रादिदेवावतरणम्, देवक्यष्टमगर्भात्त्वद्वध इति कंसं प्रति नारदवचनम्, कुपितकंसकृतं वसुदेवदेवक्योः कारागृहे स्थापनम्, देवक्या जातमात्रषट्पुत्राणां कंसकृतवधनिरूपणम्, विष्णुमायासंवादे मायां प्रति भगवदाज्ञानिरूपणम्... ... ... ... ... ... १८१

भगवन्निदेशमनुसृत्य मायाकृतं देवक्युदराद्गर्भाकर्षणं रोहिण्युदरे गर्भस्थापनं च, यशोदाजठरे मायास्थितिनिरूपणम्, देवक्युदरे भगवत्प्रवेशकथनम्, तन्निमित्तं ग्रहादीनां सम्यक्प्रचारादिवर्णनम्, स्त्रीपुंसैर्द्रष्टुमशक्याया देवक्या देवकृता स्तुतिः, भगवदवतारसमये देवकृतपुष्पवृष्ट्यादिवर्णनम्, वसुदेवदेवकीकृतभगवत्स्तवप्रार्थनाकथनम्, देवकीं प्रति भगवदुक्तिः, गोकुलं गत्वा वसुदेवकृतं यशोदाशयने पुत्रस्थापनम्, तत्रत्यकन्याया आनयनम्, बालध्वनिश्रवणोत्तरमेव दूतकृतं देवकीपुत्रजन्मनिवेदनम्, कारागृहं प्रति कंसागमनम्, साश्रुलोचनं रुदत्यां देवक्यां बलात्कारेण कंसकृतदारिकापोथननिवेदनम्, मायायाः स्वस्वरूपधारणपूर्वकमाकाशं प्रति गमनम्, मायाकृतं कंसनिर्भर्त्सनम्, देवकृता मायास्तुतिः, मायायाः स्वर्गं प्रति गमनम् ... ... १८२

उद्विग्नमनःकंसकृतं प्रलम्बादीन्प्रति कन्यावृत्तान्तादिनिवेदनम्, दैत्यान्प्रति बालघातविषयकः कंसकृतो निदेशः, कंसकृतं वसुदेवदेवकीसान्त्वनं तयोर्मोचनं च... ... ... ... ... ... १८३

अ०

मथुरायामेव नन्दशकटावसथं प्रति वसुदेवगमनम्, वसुदेवनन्दयोः प्रेमसंवादः, वसुदेवाज्ञया नन्दादिगोपानां गोकुलं प्रत्यागमनम्, कृष्णकृतः पूतनावधः, पूतनोत्सङ्गाद्गृहीतबालकस्य गोपुच्छभ्रामणादिना दोषापाकरणम्, नन्दकृतं बालकस्वस्त्ययनम्, बालकपादप्रहारेण शकटपरिवर्तनम्, तेन गोपीजनकृतं विस्मयकथनम्, 'अनेन शकटपातनं कृतमिति बालानां वचनम्, यशोदाकृतं शकटपूजनम्, वसुदेवप्रचोदितगर्गकृतं प्रच्छन्नतया बालकयोर्नामकरणम्, रिङ्गणलीलावर्णनम्, यशोदाकृतं कृष्णस्य दाम्ना बन्धनम्, गृहकर्मणि व्यग्रायां यशोदायां कृष्णकृतं यमलार्जुनपातनम्, दामोदरसंज्ञाप्राप्तिकारणम्, महोत्पातभीरूणां गोपानां वृन्दावनगमनविषयको मन्त्रः, गोव्रजैः सह गोपानां वृन्दावनं प्रति प्रवेशः, वृन्दावनशोभावर्णनम्, गोपपुत्रैः सह बालकयोः क्रीडावर्णनम् ... ... ... १८४

**कालीयदमनाख्यानम्,** रामं विना गोपैः सह कालीयह्रदं प्रति कृष्णस्याऽऽगमनम्, सविषह्रददर्शनेन कृष्णाचिन्तननिरूपणम्, ह्रदे कृष्णनिपातनकथनम्, तत्र सपरिवारस्य कालीयस्याऽऽगमनं दंशश्च, सरुदितं गोपबालककृतं कालियह्रदे कृष्णनिपातनकथनम्, वज्रपातसमवचःश्रवणानन्तरं यशोदया सह गोपगोपीनामागमनम्, सर्पभोगवेष्टितकृष्णदर्शनेन नन्दयशोदयोर्निश्चेष्टताप्रतिपादनम्, गोपीनां विलापः, नन्दादीनां दुःखापनोदनाय बलदेवस्य कृष्णं प्रति बोधनिरूपणम्, कृष्णकृतं कालियफणानामुपरि नर्तनम्, कृष्णाङ्घ्रिकुट्टनमोहितकालियमुखाद्रुधिरस्रावकथनम्, भर्तृव्यसनकर्शितनागपत्नीकृतकृष्णस्तुतिप्रार्थनानिरूपणम्, कालियकृतं कृष्णस्तवनम्, समुद्रसलिलगमनविषयकः कालियं प्रति कृष्णनिदेशः, सपरिवारस्य कालियस्य समुद्रं प्रति गमनम्, कृष्णस्य ह्रदादुत्तरणम्, आनन्देन नन्दयशोदादिगोपगोपीकृतकृष्णालिङ्गनादिकथनम् ... ... ... १८५

**धेनुकवधाख्यानम्,** गोपगणैः सह रामकेशवयोस्तालवनं प्रति गमनम्, तालफलस्पृहान्वितानां गोपानां रामकृष्णौ प्रति विज्ञापनम्, रामकृष्णकृतं तालफलपातनम्, धेनुककृतं रामकृष्णोरसि पादताडनम्, कृष्णकृतो धेनुकासुरवधः, निराबाधस्थले गोसंचारवर्णनम् ... ... ... ... ... १८६

रामकृष्णकृतबहुविधलीलावर्णनम्, वाह्यवाहकलक्षणक्रीडामिषेण बलदेवकृतप्रलम्बासुरवधनिरूपणम्,

अ०

प्रलम्बवधेन सानन्दगोपकृता रामप्रशंसा, सायं व्रजं प्रति गमनम्, शरद्वर्णनम्, **गोवर्धनाख्यायिकारम्भः,** इन्द्रयागोत्सवारम्भप्रवृत्तान्गोपान्प्रति कृष्णस्य प्रश्नः, नन्ददत्तयोग्योत्तरकथनम्, इन्द्रयागापेक्षया गोवर्धनयागविषयकं नन्दं प्रति युक्तितः कृष्णकृतं निवेदनम्, कृष्णवागमृतश्रवणहृष्टनन्दादिगोपकृतगिरियज्ञनिरूपणम्, गिरये बलिदानम्, बहुविधान्नैर्ब्राह्मणसंतर्पणम्, गोभिः सह प्रदक्षिणां कुर्वतो गोपान्प्रति शैलरूपधारिकृष्णकृतं संभाषणम्, प्रणतेभ्यो गोपेभ्यो वरप्रदानम्, गोपानां गोष्ठं प्रति गमनम् ... १८७

स्वमखप्रतिहननप्रकुपितेन्द्रस्य गोकुलनाशाय सांवर्तकसंज्ञकमेघान्प्रति निदेशः, मघासारपीडितगोपगोपीगोगोवत्साक्रन्दननिवेदनम्, स्वभक्तानां दुःखापनोदनाय कृष्णकृतं गोवर्धनोद्धरणम्, कृष्णाज्ञया सपरिवारगोपगोपीकृतं पर्वताधःप्रवेशनम्, सप्तरात्रकृतवृष्टीनां मेघानामिन्द्रकृतो निवृत्तिविषयको निदेशः, निर्मले नभसि गोपानां स्वावसथनिवेशकथनम्, कृतागस्केन्द्रकृता रहसि प्रणतिपूर्विका कृष्णस्तुतिः, गोवाक्यादिन्द्रकृतकृष्णाभिषेकनिवेदनम्, गोविन्देति नामकरणम्, इन्द्रकृताऽर्जुनविषयकप्रार्थना, इन्द्रं प्रति भूभारावतरणविषयका कृष्णस्योक्तिः, मिथःपरिष्वङ्गानन्तरं कृष्णेन्द्रयोः स्वस्वस्थानं प्रति गमनम्, **गोवर्धनयागसमाप्तिः** ... १८८

कृष्णकृतबहुविधलीलावलोकनविस्मयाविष्टानां गोपानां कृष्णस्य च संवादः, **रासक्रीडारम्भः,** शारदवनशोभावलोकनप्रमुदितान्तःकरणश्रीकृष्णकृतमुरलीरवमोहितगोपीजनस्य कृष्णान्तं प्रत्यागमनम्, कृष्णैकतानवृत्तीनां गोपीनां कृष्णस्य च नानाविधचेष्टावर्णनं रासक्रीडनं च, वृषभरूपधृगरिष्टराक्षसागमनं तस्य वर्णनं च, कृष्णकृतारिष्टवधवर्णनम् १८९

कंसनारदसंवादः, कंसकृतमक्रूरप्रेषणम्, बलकृष्णनाशार्थं कंसकृता चाणूरमुष्टिकयोर्योजना, कृष्णवधाय केशिकृतं वृन्दावनं प्रति गमनम्, केशिहेषिताद्गोपादीनां भयप्राप्तिः, कृष्णकृतं केशिवधवर्णनम्, नारदकृतं कृष्णवर्णनम्, ... ... ... ... १९०

नन्दगोकुलेऽक्रूरागमनम्, अक्रूरकृतं श्रीकृष्णवर्णनम् १९१

अक्रूरकृतं कृष्णनमनम्, अक्रूरकृतं कंसोक्तेर्निवेदनम्, कंसवधार्थं कृष्णोक्तिः, मथुरापुरीं प्रति रामकृष्णाक्रूरगमनम्, कृष्णगमनाद्दुःखितस्य गोपीजनस्य परस्परं संभाषणम्, यमुनाजलगतमक्रूरं प्रति भगवद्दर्शनम्, अक्रूरकृता कृष्णस्तुतिः, कृष्णाक्रूरसंवादः, मथुरायां बलकृष्णयोः पादचारिणोः पराक्रमवर्णनम् ... ... ... ... ... ... १९२

अ०

कुब्जां प्रति कृष्णवचनम्, कृष्णकृतानुग्रहवर्णनम्, चाणूरमुष्टिकौ प्रति बलकृष्णवधाय कंसवचनम्, नागरजनकृतं बलकृष्णवर्णनम्, कृष्णचाणूरयुद्धम्, मुष्टिकबलदेवयोर्युद्धम्, चाणूरमुष्टिकनाशः, कंससुनाम्नोर्वधः, वसुदेवकृता भगवत्स्तुतिः ... ... १९३

देवकीवसुदेवाभ्यां सह कृष्णसंवादः, हरिकृतं कंसपत्नीसमाधानम्, उग्रसेनं प्रति कृष्णकृतं राज्याभिषेचनम्, उग्रसेनं प्रति सुधर्माख्यसभाप्राप्तिवर्णनम्, बलदेवजनार्दनौ प्रति सांदीपनिकृतमन्त्रप्रदानम्, सांदीपिनि प्रति पुत्रप्राप्तिः, ... ... १९४

जरासंधेन सह रामजनार्दनयुद्धम्, जरासंधपराभवः, जरासंधस्य युद्धाय पुनरागमनम्, जरासंधपराजयः ... ... ... ... ... ... १९५

कालयवनोत्पत्तिवर्णनम्, कालयवनकृतो यादवनाशः, यादवरक्षणार्थं कृष्णकृतं द्वारकोत्पादनम्, मुचुकुन्दात्कालयवननाशवर्णनम्, मुचुकुन्दकृतं भगवद्वर्णनम् ... ... ... ... ... ... १९६

मुचुकुन्दाय भगवत्कृतं वरदानम्, तपसे गन्धमादनं प्रति मुचुकुन्दगमनम्, गोकुलं प्रति बलदेवागमनम् ... ... ... ... ... ... १९७

वरुणवारुणीसंवादः, यमुनाबलदेवसंवादः, मथुरायां बलदेवागमनम्, ... ... ... ... ... १९८

कृष्णकृतं रुक्मिणीहरणम्, कृष्णकृतो रुक्मिपराभवः, रुक्मिणीविवाहः, प्रद्युम्नोत्पत्तिवर्णनम् ... ... १९९

शम्बरासुरकृतं प्रद्युम्नहरणम्, शम्बरकृतः प्रद्युम्नस्य समुद्रे प्रक्षेपः, मत्स्योदराच्छम्बरपत्नीं प्रति प्रद्युम्नप्राप्तिः, शम्बरपत्न्या सह नारदसंवादः, प्रद्युम्नेन सह शम्बरपत्नीसंवादः, शम्बरप्रद्युम्नयोर्युद्धम्, कालशम्बरवधः, द्वारवतीं प्रति प्रद्युम्नागमनम्, श्रीकृष्णनारदसंवादः ... ... ... ... २००

रुक्मिणीपुत्राणां नामानि, कृष्णभार्याणां नामानि, अनिरुद्धविवाहः, रुक्मिबलदेवयोर्द्यूतवर्णनम्, बलदेवकृतो रुक्मिवधः ... ... ... ... ... २०१

द्वारवतीं प्रतीन्द्रागमनम्, इन्द्रेण निवेदितं नरकचेष्टितवर्णनम्, प्राग्ज्योतिषपुरं प्रति कृष्णगमनम्, कृष्णकृतो मुरवधः, कृष्णकृतो नरकवधः, धरणीकृतं भगवद्वर्णनं कुण्डलदानं च, अदित्यै कुण्डलदानाय भगवत्कृतं त्रिदशालयगमनम् ... ... २०२

अदितिकृता भगवत्स्तुतिः, कृष्णादितिसंवादः, सत्यभामावचनात्कृष्णकृतं पारिजातकग्रहणम्, वनपालैः सह श्रीकृष्णसंवादः, वनपालैः सह सत्यभामाया

अ० | अ०

गर्वोक्तिवर्णनम्, देवैः सह श्रीकृष्णयुद्धम्, इन्द्रेण सह सत्यभामासंवादः, इन्द्रकृतं भगवद्वर्णनम् ... २०३
इन्द्रेण सह श्रीकृष्णसंवादः, इन्द्रकृता भगवत्स्तुतिः, द्वारकां प्रति भगवदागमनम्, आनीतस्य पारिजातकस्य वर्णनम्, निष्कुटे स्थापनम्, अनेकरूपेण कृतं षोडशसहस्रपरिमितस्त्रीभिः सह वरणम् ... २०४
रुक्मिण्यादिपत्नीषु जातानां पुत्राणां नामानि, पौत्रादीनां नामानि, उषानिरुद्धविवाहकथनम्, बाणसुतयोषया सह गौरीसंवादः, चित्रलेखाया आलेख्यनिर्माणकौशलम् ... ... ... ... २०५
शंकरेण सह बाणसंवादो युद्धप्रार्थना च, कन्यान्तःपुरे चित्रलेखया कृतमनिरुद्धानयनम्, बाणानिरुद्धयोर्युद्धम्, अनिरुद्धबन्धनम्, कृष्णबलदेवकृतं युद्धार्थमागमनम्, बाणेन सह भगवद्युद्धम्, भगवता सह शंकरयुद्धम्, हरिहरसंवादः, सैपत्नीकानिरुद्धेन सह द्वारकां प्रति भगवदागमनम् ... ... २०६
व्यासर्षिसंवादे पौण्ड्रकवासुदेवप्रेषितदूतस्य द्वारकागमनम्, दूतेन सह भगवत्संवादः, श्रीकृष्णेन सह पौण्ड्रककाशिराजयुद्धम्, पौण्ड्रककाशिराजवधः, शंकरवरात्काशिराजपुत्रकृतं कृत्योत्पादनम्, सुदर्शनभयात्कृत्याकृतो वाराणसीप्रवेशः, चक्रकृतो वाराणसीदाहः पुनः कृष्णहस्ते चक्रागमनं च ... २०७
व्यासर्षिसंवादे बलदेवपराक्रमवर्णनम्, साम्बकृतं दुर्योधनकन्याहरणम्, दुर्योधनादिभिः कृतं साम्बप्रतिबन्धनम्, हस्तिनापुरं प्रति बलदेवागमनम्, कौरवैः सह बलदेवसंवादः, बलदेवकृतं हस्तिनापुरकर्षणम्, कौरवकृतं बलदेवप्रार्थनम् ... ... २०८
व्यासर्षिसंवादः, बलदेवकृतं द्विविदवानरवधवर्णनम् २०९
व्यासर्षिसंवादे भूमिभारावतरणकथनम्, कुलोपसंहारकथनम्, द्वारकात्यागवर्णनम्, भगवतो निजधामगमनम्, यादवशापहेतुकथनम्, देवप्रहितदूतागमनम्, कृष्णेन सह दूतसंवादः, महोत्पातशमार्थं यादवकृतं प्रभासं प्रति गमनम्, भगवता सहोद्धवसंवादः, यादवनाशवर्णनम् ... ... ... २१०
भगवत्प्रसादाल्लुब्धकस्य स्वर्गगमनम्, ... ... २११
व्यासर्षिसंवादः, रुक्मिण्यादीनामवसानकथनम्, आभीरार्जुनसंवादः, आभीरैः सहार्जुनयुद्धम्, अर्जुनपराजयकथनम्, म्लेच्छकृतं वरस्त्रीहरणम्, अर्जुनविषादवर्णनम्, व्यासार्जुनसंवादे व्यासकृतमर्जुनसमाधानम्, **अष्टावक्राख्यानम्**, अष्टावक्रकृततपोवर्णनम्, तिलोत्तमादिरम्भाकृता नतिपूर्विकाऽष्टावक्रप्रशंसा, रम्भाः प्रति पुरुषोत्तमपतिप्राप्तिरूपमष्टावक्रस्य वरप्रदानम्, जलादुत्तीर्णस्य मुनेः शरीरवक्रतादर्शनेन रम्भाकृतहासस्फुटीभवनम्, रम्भाहासजकोपयुक्तमुनिदत्तशापकथनम्, पुनः प्रसन्नात्ममुनिवरप्रदानम्, व्यासर्षिप्रतिपादितपूर्ववृत्तश्रवणकुतूहलाविष्टार्जुनस्य धर्मसमीप आगमनम्, अर्जुनसमीरितव्यासवचनश्रवणोत्तरं सबान्धवस्य धर्मस्य महाप्रस्थानोपक्रमः, परीक्षिते राज्यदानमरण्यं प्रति गमनं च, **कृष्णचरितसमाप्तिकथनम्** ... ... ... ... २१२
वराहावतारवर्णनम्, वराहरूपिणः परमेश्वरस्य देहावयववर्णनम्, यज्ञवाराहकृतं पृथिव्या उद्धरणम्, नृसिंहावतारवर्णनम्, हिरण्यकशिपुकृततपोवर्णनम्, तस्मै ब्रह्मवरप्रदानम्, ब्रह्मणा सह देवानां भगवत्संनिधौ गमनम्, देवकृता भगवत्स्तुतिः, भगवत्कृतं नृसिंहरूपेणावतरणम्, नृसिंहकृतो हिरण्यकशिपुवधः, वामनावतारवर्णनम्, दैत्यनामावलिकथनम्, दत्तात्रेयावतारवर्णनम्, जामदग्न्यप्रादुर्भाववर्णनम्, जामदग्न्यचरितनिरूपणम्, दाशरथिरामावतारप्रादुर्भावः, संक्षेपतः श्रीरामचरितम्, श्रीकृष्णावतारवर्णनं संक्षेपतस्तच्चरितं च, कल्क्यवतारवर्णनम्, ईशावतारचरितश्रवणपठनफलम् २१३
व्यासमुनिसंवाद उत्क्रान्तिकालाद्रारभ्य यमलोकमार्गवर्णनम्, नरकनामानि, नरकवर्णनम्, देहावसानवर्णनम्, सुखमृत्युप्राप्तिवर्णनम्, दुःखमृत्युप्राप्तिवर्णनम्, यमदूतवर्णनम्, पुण्यकृतां वर्णनम्, पापकृतां वर्णनम्, यमपुरीवर्णनम्, पुरीद्वारवर्णनम् ... ... २१४
दक्षिणमार्गेण गच्छतां प्राणिनां क्लेशवर्णनम्, तान्प्राणिनः प्रति याम्यवचनम्, चित्रगुप्तकृतं पापिवर्णनम्, यमाज्ञया याम्यकृतं निग्रहानुग्रहवर्णनम्, भयंकरनरकाणां वर्णनं नामानि च, नानाविधपातकवर्णनम्, पातकानुरोधेन नरकप्राप्तिकथनम् २१५
नरकदुःखनिवारणाय मुनिकृतो व्यासं प्रति प्रश्नः, व्यासकथितं धर्माचरणं सुगतिप्राप्तिवर्णनं च ... २१६
धर्मश्रैष्ठ्यवर्णनम्, शरीरोत्पत्तिकथनम्, पुण्यपापानुरोधेन नानायोनिषु जननवर्णनं पापपुण्यवर्णनं च... २१७
शुभप्राप्तिविषयको मुनीनां व्यासं प्रति प्रश्नः, अन्नप्रशंसा, अन्नदानाच्छुभप्राप्तिकथनम् ... ... २१८
श्राद्धविधिनिरूपणम्, पितृभिः सह सोमजावचनम्, शशधरेण पितृभ्यो दत्तस्य शापस्य कथनम्, सोमजायाः कोकाख्यनदीभवनम्, पितृकृतं हरेः स्तोत्रम्, पितॄणामुद्धारकथनम्, अग्नौकरणं पिण्डदानं च ... ... ... ... ... ... २१९
श्राद्धकल्पवर्णनम्, प्रतिपदादिषु सर्वासु तिथिषु श्राद्धकरणे फलकथनम्, अयनादिश्राद्धवर्णनम्, सपि-

अ०

ण्डीकरणम्, श्राद्धे ब्राह्मणविचारः, श्राद्धे देयानां फलानां वर्णनम्, पिण्डदानकथनम् ... ... २२०

सदाचारकथनम्, धर्मवर्णनम्, मलादीनामुत्सर्गविधिकथनम्, आचमनविधिः, अनध्यायकथनम्, कन्यावर्णनम्, ऋतुगमनप्रकारः, देवपूजाकथनम्, देवपितृतर्पणम्, वैश्वदेवकथनम्, विप्रवसतियोग्यदेशानां कथनम्, सूतकविचारः ... ... ... २२१

व्यासमुनिसंवादे वर्णधर्मकथनम् ... ... ... २२२

उमामहादेवसंवादे ब्राह्मणानां शूद्रत्वप्राप्तिकथनम्, शूद्रादीनामुत्तमगतिप्राप्तिवर्णनम्, संकरजातिलक्षणकथनम्... ... ... ... ... ... २२३

उमामहेश्वरसंवादे मानवानामुत्तमगतिप्राप्तिवर्णनम्, स्वर्गप्राप्तिहेतुभूतधर्मकथनम्, मानसधर्मफलकथनम्, कर्मफलोदयकथनम्... ... ... ... २२४

उमामहेश्वरसंवादे देवलोकप्राप्तिकारणवर्णनम्, कृपणादीनां नरकप्राप्तिकथनम्, स्वधर्मनिरतानां वर्णनम्, अधर्मनिरतानां निरयप्राप्तिकथनम् ... ... २२५

मुनिमहेश्वरसंवादे वासुदेवमहिमवर्णनं वासुदेववर्णनं च, मनुवंशवर्णनम्, वासुदेवपूजाकथनम्, व्यासमुनिसंवादे कृष्णपूजाफलकथनम् ... ... २२६

व्यासमुनिसंवादे विष्णुपूजाकथनम्, विष्णोर्जागरे गीतिकाफलम्, चाण्डालराक्षससंवादः, सत्यप्रशंसा, प्रजागरपुण्यप्राप्तये राक्षसकृता मातङ्गप्रार्थना, ब्रह्मराक्षसस्य पूर्वजन्मकथनम्, राक्षसत्वप्राप्तिकथनम्, चाण्डालपूर्वजन्मकथनम्, मूर्खब्राह्मणसिद्धसंवादः, उर्वशीमूर्खब्राह्मणसंवादः, शकटदानकथनम् २२७

व्यासमुनिसंवादे विष्णुभक्तिहेतुकथनम्, भास्करादीनामाराधनकथनम्, अवैष्णवत्वप्राप्तिकारणकथनम्, भगवन्मायावर्णनम्, कामदमनाख्यानम्, विष्णोः सकाशान्नारदप्राप्तमायादर्शनकथनम्, कपालमोचनतीर्थोत्पत्तिवर्णनम्, कामदमनस्य स्वर्गगमनम्... २२८

व्यासमुनिसंवादे महाप्रलयवर्णनम्, कलिस्वरूपवर्णनम्, कलिगतभविष्यकथनम् ... ... ... २२९

व्यासमुनिसंवादे द्वापरयुगान्तकथनम्, नष्टधर्मनिमित्तकथनम्, भविष्यकथनम्... ... ... ... २३०

व्यासर्षिसंवादे प्राकृतप्रतिसंचरकथनम्, कल्पमानकथनम्, नैमित्तिकलयस्वरूपकथनम् ... ... २३१

प्राकृतलयस्वरूपकथनम् ... ... ... २३२

आत्यन्तिकलयनिरूपणम्, आध्यात्मिकादितापत्रयकथनम्, शिरोरोगप्रतिश्यायादिशारीराध्यात्मिकतापनिरूपणम्, कामक्रोधादिमानसिकतापवर्णनम्, मृगपक्ष्यादिजनिताधिभौतिकतापवर्णनम्, गर्भजन्मजरादिजनिताधिदैविकतापवर्णनम्, गर्भस्थितजन्तुदुःखावस्थानिरूपणम्, बाल्यावस्थानिरूपणम्, जरावस्थाकथनम्, मरणावस्थानिरूपणम्, पापकर्मणो नरकप्राप्तिकथनम्, मुक्तिज्ञानमहिमवर्णनम् ... ... ... ... ... ... २३३

योगाभ्यासनिरूपणम्, योगाद्व्याय योगशास्त्राध्ययनादिनिरूपणम्, योगाभ्यासार्थं मनोविकलेत्यादिनिषिद्धस्थलवर्जनकथनम्, आश्रमेत्यादिविहितस्थलस्वीकारवर्णनम्, योगाभ्यासफलभूतध्येयस्वरूपादिवर्णनम्... ... ... ... ... २३४

विस्तरेण योगनिरूपणम्, सांख्यवर्णनम्, प्रज्ञावच्छ्रोत्रिययज्वप्राज्ञानसूयकादीनां ब्रह्मप्राप्तिः, समनस्केन्द्रियाणामैकाग्र्योपायकथनम् ... ... ... २३५

ज्ञानिनां मोक्षप्राप्तिनिरूपणम्, कर्मिणां तारतम्येन स्वर्गादिलोकफलप्राप्तिवर्णनम्, सर्वोत्तमत्वादिगुणविशिष्टात्मस्वरूपवर्णनम्, आकाशादिपञ्चमहाभूतगुणकथनम् ... ... ... ... ... २३६

गुणसर्जनकथनम्, विद्वदविदुषोरभयभयप्राप्तिः, सर्वधर्मविशिष्टधर्मनिरूपणम्, क्षमादिभिः क्रोधादीनां नाश इति निरूपणम् ... ... ... ... २३७

योगविधिनिरूपणम्, योगसांख्यमतज्ञानिनो दयाद्याचरणतुल्यताकथनम्, उभयमतज्ञानिनोऽसमदर्शनकथनम्, विशेषतो योगिनः प्रशंसा, योगिनो वर्ज्यावर्ज्याहारनिरूपणम्, कामाद्यखिलशत्रुजयनिरूपणम्, योगाभ्यासान्नारायणपदप्राप्तिकथनम् २३८

सांख्यविधिनिरूपणम्, सदोषमानुषादिविषयज्ञानकथनम्, सत्वादीनां गुणसंख्याज्ञाननिरूपणम्, दृष्ट्यादीनां रूपादिषु संसक्तताकथनम्, मोक्षस्य दुर्लभत्वनिरूपणम्, देहस्थितपञ्चदोषनिवेदनम्, संसारस्य समुद्ररूपकेण वर्णनम्, सांख्यज्ञानमहिमवर्णनम्, सांख्ययोगभ्रष्टानामुत्तमकुल एवोत्पत्तिः, एतादृक्सांख्यज्ञानसंपादनविषयको मुनीन्प्रति द्वैपायननिदेशः... २३९

क्षराक्षरविचारनिरूपणम्, मुनिकृता बादरायणप्रशंसा, वसिष्ठकरालजनकसंवादः, जगतः क्षरत्वेन प्रतिपादनम्, ईश्वरस्याक्षरत्वेन निवेदनम्, चतुर्विंशतितत्त्वप्रतिपादनम्, तामसादीनां निरयादिप्राप्तिकथनम्, निर्गुणस्य मोक्षप्राप्तिनिवेदनम्... ... २४०

क्षराक्षरज्ञानाभावे बहुविधजन्मप्रदसंसारप्राप्तिकथनम्, अभिमानिनां बहुविधसाधनकथनम् ... ... २४१

वसिष्ठं प्रति मोक्षधर्मविषयको जनकप्रश्नः, ग्रन्थार्थज्ञानं विना तद्ग्रन्थधारणं भारायैवेतिकथनम्, ग्रन्थतत्त्वान्यविदित्वा लोभाद्वादकर्तुः पुरुषस्य नरकप्राप्तिकथनम्, अक्षरक्षरयोर्लक्षणम्, योगलक्षणवर्णनम् सांख्यज्ञानकथनम्, क्षेत्रक्षेत्रज्ञयोर्लक्षणम् ... २४२

# विषयानुक्रमः।

अ०

विद्याविद्ययोः स्वरूपकथनम्, अक्षरक्षरयोः पुनर्विस्तरेण वर्णनम्, प्रकृतिपरिवर्जनाद्विशुद्धिकथनम्, अभेदेन सांख्ययोगकथनम् ... ... ... २४३

अजस्यापि विक्रियया नानाभवनम्, एकत्वनानात्वयोर्लक्षणम्, ज्ञानविज्ञानसंज्ञितमोक्षवर्णनम्, एतज्ज्ञानदानार्थमधिकारिनिर्णयः, ब्रह्मणः सकाशादेतन्महाज्ञानमवाप्तमिति जनकं प्रति वसिष्ठोक्तिः, आनुपूर्व्या ज्ञानप्राप्तिपरम्पराकथनम् ... ...

पुराणश्रवणसुप्रीतमुनिकृता व्यासप्रशंसा, सर्वमुनीनां स्वाश्रमं प्रति गमनम्, अस्य श्रवणपठनकर्तॄणां फलप्राप्तिकथनम्, धर्मप्रशंसा ... ... ...

समाप्तेयं ब्रह्मपुराणान्तर्गताध्यायविषयानुक्रमणी ।

---

ॐ तत्सद्ब्रह्मणे नमः ।

महामुनिश्रीव्यासप्रणीतं

---

# ब्रह्मपुराणम् ।

---

अथ प्रथमोऽध्यायः ।

---

*यस्मात्सर्वमिदं प्रपञ्चरचितं मायाजगज्जायते
[2]यस्मिंस्तिष्ठति याति चान्तसमये कल्पानुकल्पे पुनः ।
यं ध्यात्वा मुनयः प्रपञ्चरहितं विन्दन्ति मोक्षं ध्रुवं
तं वन्दे पुरुषोत्तमाख्यममलं नित्यं विभुं [3]निश्चलम् ॥ १
यं ध्यायन्ति बुधाः समाधिसमये शुद्धं वियत्संनिभं
नित्यानन्दमयं प्रसन्नममलं सर्वेश्वरं निर्गुणम् ।
व्यक्ताव्यक्तपरं प्रपञ्चरहितं ध्यानैकगम्यं विभुं
तं संसारविनाशहेतुमजरं वन्दे हरिं मुक्तिदम्[6] ॥ २
सुपुण्ये नैमिषारण्ये पवित्रे सुमनोहरे । नानामुनिजनाकीर्णे नानापुष्पोपशोभिते ॥ ३
सरलैः कर्णिकारैश्च पनसैर्धवखादिरैः । आम्रजम्बूकपित्थैश्च न्यग्रोधैर्देवदारुभिः ॥ ४
अश्वत्थैः पारिजातैश्च चन्दनागुरुपाटलैः । बकुलैः सप्तपर्णैश्च पुंनागैर्नागकेसरैः ॥ ५
शालैस्तालैस्तमालैश्च नारिकेलैस्तथाऽर्जुनैः । अन्यैश्च बहुभिर्वृक्षैश्चम्पकाद्यैश्च शोभिते ॥ ६
नानापक्षिगणाकीर्णे नानामृगगणैर्युते । नानाजलाशयैः पुण्यैर्दीर्घिकाद्यैरलंकृते ॥ ७
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च जातिभिः । वानप्रस्थैर्गृहस्थैश्च [11]यतिभिर्ब्रह्मचारिभिः ॥ ८
[12]संपन्नैर्गोकुलैश्चैव सर्वत्र समलंकृते । यवगोधूमचणकैर्माषमुद्गतिलेक्षुभिः ॥ ९
चीनकाद्यैस्तथा मेध्यैः सस्यैश्चान्यैश्च शोभिते । तत्र दीप्ते हुतवहे हूयमाने महामखे ॥ १०
यजतां नैमिषेयाणां सत्रे द्वादशवार्षिके । आजग्मुस्तत्र [13]मुनयस्तथाऽन्येऽपि द्विजातयः ॥ ११
तानागतान्द्विजांस्ते तु पूजां चक्रुर्य[14]थोचिताम् । तेषु तत्रोपविष्टेषु ऋत्विग्भिः सहितेषु च ॥ १२

---

* "जयति जलभारगर्भितनीलनीरदसवर्णः । मन्दरगिरिपरिवर्तनविशिलालाञ्छनाङ्कितो विष्णुः ॥ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्" इति श्लोकद्वयं क. पुस्तके एतस्मात्प्रागधिकं दृश्यते ।

---

१ ख. °ञ्चरचितं मा° । २ क. °ति लीयते तु स° । ख. °ति लीयते च स° । ३ ग. निष्कल° । ४ ज्ञानैकगम्यं । ५ ग. प्रभुं । ६ क. °म् ॥२॥ ये पु° । ७ ग. °लैः । स° । ८ ग. °नागैः पलाशैर्ना° । ९ क.ङ. नालिकेरैस्त° । १० क. पुण्ये वेदिका° । ११ क. °भिः । समद्वैर्गो° । ख. °भिः । समृद्धैर्गो° । १२ ग. °भिः । शालिभिश्च तथा । १३ क. °न्ये च द्वि° । १४ क.ख. °थोदिता° ।

तत्राऽऽजगाम सूतस्तु मतिमाँल्लोमहर्षणः[1] । तं दृष्ट्वा ते मुनिवराः पूजां चक्रुर्मुदान्विताः ॥ १३
सोऽपि[2] तान्प्रतिपूज्यैव संविवेश वरासने । कथां चक्रुस्तदाऽन्योन्यं[3] सूतेन सहिता द्विजाः[4] ॥ १४
कथान्ते[5] व्यासशिष्यं ते[6] पप्रच्छुः संशयं मुदा । ऋत्विग्भिः सहिताः सर्वे सदस्यैः सह दीक्षिताः

मुनय ऊचुः—

पुराणागमशास्त्राणि सेतिहासानि सत्तम । जानासि देवदैत्यानां चरितं जन्म कर्म च ॥ १६
न तेऽस्त्यविदितं किंचिद्वेदे[8] शास्त्रे च भारते । पुराणे मोक्षशास्त्रे च सर्वज्ञोऽसि महामते ॥ १७
यथापूर्वमिदं सर्वमुत्पन्नं सचराचरम् । ससुरासुरगन्धर्वं स यक्षोरगराक्षसम् ॥ १८
श्रोतुमिच्छामहे सूत ब्रूहि सर्वं यथा[9] जगत् । बभूव भूयश्च यथा महाभाग भविष्यति ॥ १९
यतश्चैव जगत्सूत यतश्चैव चराचरम्[11] । लीनमासीत्तथा यत्र लयमेष्यति यत्र च[12] ॥ २०

लोमहर्षण उवाच—

अविकाराय शुद्धाय[13] नित्याय परमात्मने । सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥ २१
नमो हिरण्यगर्भाय हरये शंकराय च । वासुदेवाय ताराय सर्गस्थित्यन्तकर्मणे ॥ २२
एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने[14] नमः । अव्यक्तव्यक्तभूताय विष्णवे मुक्तिहेतवे[15] ॥ २३
सर्गस्थितिविनाशाय[16] जगतो योऽजरामरः[17] । मूलभूतो[18] नमस्तस्मै विष्णवे परमात्मने ॥ २४
आधारभूतं विश्वस्याप्यणीयांसमणीयसाम् । प्रणम्य सर्वभूतस्थ[19]मच्युतं पुरुषोत्तमम् ॥ २५
ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः । तमेवार्थ[20]स्वरूपेण[21] भ्रान्तिदर्शनतः स्थितम् ॥ २६
विष्णुं ग्रसिष्णुं विश्वस्य स्थितौ[22] सर्गे तथा प्रभुम् । सर्वज्ञं जगतामीशमजमक्षयमव्ययम् ॥ २७
आद्यं[23] सुसूक्ष्मं[24] विश्वेशं ब्रह्मादीन्प्रणिपत्य च[25] । इतिहासपुराणज्ञं वेदवेदाङ्गपारगम् ॥ २८
सर्वशास्त्रार्थतत्त्वज्ञं पराशरसुतं प्रभुम् । गुरुं प्रणम्य वक्ष्यामि पुराणं वेदसंमितम् ॥ २९
कथयामि यथा पूर्वं दक्षाद्यैर्मुनिसत्तमैः । पृष्टः प्रोवाच भगवानब्जयोनिः[26] पितामहः ॥ ३०
शृणुध्वं संप्रवक्ष्यामि कथां पापप्रणाशिनीम्[27] । कथ्यमानां मया चित्रां बह्वर्थां श्रुतिविस्तराम्[28] ३१
यस्त्विमां धारयेन्नित्यं शृणुयाद्वाऽप्यभीक्ष्णशः । स्ववंशधारणं कृत्वा स्वर्गलोके महीयते ॥ ३२
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम् । प्रधानं पुरुषस्तस्मान्निर्ममे विश्वमीश्वरः[29] ॥ ३३
तं बुध्यध्वं मुनिश्रेष्ठा ब्रह्माणममितौजसम् । स्रष्टारं सर्वभूतानां नारायणपरायणम् ॥ ३४
अहंकारस्तु महतस्तस्माद्भूतानि जज्ञिरे । भूतभेदाश्च भूतेभ्य इति सर्गः सनातनः ॥ ३५
विस्तरावयवं चैव यथाप्रज्ञं यथाश्रुति । कीर्त्यमानं शृणुध्वं वः[30] सर्वेषां कीर्तिवर्धनम् ॥ ३६
कीर्तितं स्थिरकीर्तिनां सर्वेषां पुण्यवर्धनम्[31] । ततः स्वयंभूर्भगवान्सिसृक्षुर्विविधाः प्रजाः ॥ ३७
अप एव ससर्जाऽऽदौ तासु वीर्यमथासृजत्[32] । आपो नारा इति प्रोक्ता आपो वै नरसूनवः ३८
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः । हिरण्यवर्णमभवत्तदण्डमुदकेशयम् ॥ ३९

---

१ क. °मान्रोम° । २ ग. °पि तां प्रतिगृह्यैव । ३ क. °स्तथाऽन्यो° । ४ ग. सह ते द्वि° । ५ ख. °न्ते च व्या° । ६ क. तु । ७ क. °प्रच्छुस्तेऽव्ययं मु° । ८ क. °द्वेदशास्त्रेषु भा° । ९ क. °थागतम् । व° । १० क. °गत्सर्वं य° । ११ क. भविष्याति । १२ क. वा । १३ क. ख. गुह्याय । १४ क. °क्ष्माय ते न° । १५ क. व्यक्तहेतवे । १६ ख. ग. °शानां ज° । १७ ख. ग. यो जगन्मयः । मू° । १८ क °तोऽव्ययस्तस्मै । १९ ग. °भूतेशम° । २० क. तमेव स्वस्व° । २१ ग. °वाऽऽत्मस्व° । २२ क. स्थितिसर्गे । ग. स्थितिसर्गे । २३ ख. °द्यं सू° । २४ ख. °क्ष्मं च वि° । २५ ख. वै । २६ क. °नजो नित्यः पि° । २७ क. °प्रमोचिनी° । २८ ग. °तिसंमिताम् । २९ ग. °मीदृशम् । तं । ३० क. वै । ३१ ख. ग. °ण्यकर्मणाम् । ३२ ख. °मवासृ° ।

तत्र जज्ञे स्वयं ब्रह्मा स्वयंभूरिति[1] नः श्रुतम् । हिरण्यवर्णो भगवानुषित्वा परिवत्सरम् ॥ ४०
तदण्डमकरोद्द्वैधं दिवं भुवमथापि च । तयोः शकलयोर्मध्य आकाशमकरोत्प्रभुः ॥ ४१
अप्सु पारिप्लवां पृथ्वीं दिशश्च दशधा दधे[2] । तत्र कालं मनो वाचं कामं क्रोधमथो रतिम् ॥४२
ससर्ज सृष्टिं तद्रूपां स्रष्टुमिच्छन्प्रजापतीन्[3] । मरीचिमत्र्यङ्गिरसौ[4] पुलस्त्यं पुलहं क्रतुम् ॥ ४३
वसिष्ठं च[5] महातेजाः सोऽसृजत्सप्त मानसान् । सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः ॥ ४४
नारायणात्मकानां तु सप्तानां ब्रह्मजन्मनाम् । ततोऽसृजत्पुरा[6] ब्रह्मा रुद्रं रोषात्मसंभवम् ॥४५
सनत्कुमारं च विभुं पूर्वेषामपि पूर्वजम्[7] । सप्तस्वेता[8] अजायन्त प्रजा रुद्राश्च[9] भो द्विजाः ॥ ४६
स्कन्दः सनत्कुमारश्च तेजः संक्षिप्य तिष्ठतः[10] । तेषां सप्त महावंशा दिव्या देवगणान्विताः[11] ॥४७
क्रियावन्तः प्रजावन्तो महर्षिभिरलंकृताः । विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च ॥ ४८
वयांसि च ससर्जाऽऽदौ पर्जन्यं च ससर्ज ह । ऋचो यजूंषि सामानि निर्ममे यज्ञसिद्धये ॥४९
साध्यान[12]जनयद्देवानित्येवमनु[13]संजगुः । उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ॥ ५०
आपवस्य[14] प्रजासर्गं सृजतो हि प्रजापतेः । *सृज्यमानाः प्रजा नैव विवर्धन्ते यदा तदा ॥ ५१
द्विधा कृत्वाऽऽत्मनो देहमर्धेन पुरुषोऽभवत्[15] । अर्धेन नारी तस्यां तु सोऽसृजद्द्विविधाः प्रजाः ॥
दिवं च पृथिवीं चैव महिम्ना व्याप्य तिष्ठति । विराजमसृजद्विष्णुः सोऽसृजत्पुरुषं विराट् ५३
पुरुषं तं मनुं विद्यात्तस्य मन्वन्तरं स्मृतम् । द्वितीयं मानसस्यैतन्मनोरन्तरमुच्यते ॥ ५४
स वैराजः प्रजासर्गं ससर्ज पुरुषः प्रभुः । नारायणविसर्गस्य प्रजास्तस्याप्ययोनिजाः ॥ ५५
आयुष्मान्कीर्तिमान्[16]पुण्यप्रजावांश्च भवेन्नरः । आदिसर्गं विदित्वेमं[17] यथेष्टां चाऽऽप्नुयाद्गतिम्+॥५६

इति श्रीमहापुराणे ब्राह्मे प्रथमोऽध्यायः ॥ १ ॥

---

अथ द्वितीयोऽध्यायः ।

---

**लोमहर्षण उवाच—**

स सृष्ट्वा[18] तु प्रजास्त्वेवमापवो वै प्रजापतिः । लेभे वै पुरुषः पत्नीं शतरूपामयोनिजाम् ॥ १
आपवस्य महिम्ना तु दिवमावृत्य तिष्ठतः । धर्मेणैव मुनिश्रेष्ठाः[19] शतरूपा व्यजायत ॥ २
सा तु वर्षायुतं तप्त्वा तपः परमदुश्चरम् । भर्तारं दीप्ततपसं पुरुषं प्रत्यपद्यत ॥ ३
स वै स्वायंभुवो विप्राः पुरुषो मनुरुच्यते । तस्यैकसप्ततियुगं मन्वन्तरमिहोच्यते ॥ ४
वैराजात्पुरुषाद्वीरं शतरूपा व्यजायत । प्रियव्रतोत्तानपादौ वीरात्काम्या व्यजायत ॥ ५
काम्या नाम सुता श्रेष्ठा कर्दमस्य प्रजापतेः । काम्यापुत्रास्तु चत्वारः सम्राट्कुक्षिर्विराट्प्रभुः ६

---

* इदमर्धं क. ख. पुस्तकयोर्नास्ति । + क. ख. पुस्तकयोरत्राध्यायसमाप्तिर्नास्ति ।

---

१ क. °ति विश्रु° । २ क. दधौ । ३ क. °पतिः । म° । ४ ख. ग. °रसं पु° । ५ क. च । ६ ग. °त्पुनर्ब्रह्मा । ७ क. °म् । ततश्वेता । ८ ग. °स त्वेता अ° । ९ ग. रुद्रश्च । १० क. तिष्ठति । ११ ग. °णार्चिताः । १२ ख. °ध्यानशास्तथा देवा° । १३ ख. °नुशुश्रुमः । उ° । ग. °नुशुश्रुम । उ° । १४ ख. आयतं च प्र° । १५ क. ख. तिष्ठतः । १६ क. ग. °मान्धन्यः प्र° । १७ ग. °दित्वैनं य° । १८ ख. सृष्टासु प्र° । १९ क. ख °म मुनिश्रेष्ठाः क° ।

उत्तानपादं जग्राह पुत्रमत्रिः प्रजापतिः । उत्तानपादाच्चतुरः सूनृता सुषुवे सुतान् ॥ ७
धर्मस्य कन्या सुश्रोणी सूनृता नाम विश्रुता । उत्पन्ना वाजिमेधेन ध्रुवस्य जननी शुभा ॥ ८
ध्रुवं च कीर्तिमन्तं च आयुष्मन्तं वसुं तथा । उत्तानपादोऽजनयत्सूनृतायां प्रजापतिः ॥ ९
ध्रुवो वर्षसहस्राणि[1] त्रीणि[2] दिव्यानि भो द्विजाः । तपस्तेपे महाभागः प्रार्थयन्सुमहद्यशः ॥ १०
तस्मै ब्रह्मा ददौ प्रीतः स्थानमात्मसमं प्रभुः । अचलं चैव पुरतः सप्तर्षीणां प्रजापतिः ॥ ११
तस्याभिमानं[3]मृद्धिं च महिमानं निरीक्ष्य च[4] । देवासुराणामाचार्यः श्लोकं प्रागुशना जगौ ॥ १२
*अहोऽस्य तपसो वीर्यमहो श्रुतमहोऽद्भुतम् । यमद्य पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः ॥ १३
तस्मा[5]च्छ्लिष्टिं च भव्यं च ध्रुवाच्छंभुर्व्यजायत[6] । श्लिष्टेराधत्त सुच्छायां[7] पञ्च पुत्रानकल्मषान् ॥
रिपुं[8] रिपुंजयं वीरं[9] वृकलं वृकतेजसम् । रिपोराधत्त बृहती चक्षुषं[10] सर्वतेजसम् ॥ १५
अजीजनत्पुष्करिण्यां वैरिण्यां चाक्षुषं मनुम् । प्रजापतेरात्मजायां[11] वीरणस्य महात्मनः ॥ १६
मनोरजायन्त दश नड्वलायां[12] महौजसः । कन्यायां मुनिशार्दूला वैराजस्य प्रजापतेः ॥ १७
कुत्सः[13] पुरुः[14] शतद्युम्नस्तपस्वी सत्यवाक्कविः । अग्निष्टु[15]दतिरात्रश्च सुद्युम्न[16]श्चेति ते नव ॥ १८
अभिमन्युश्च[17] दशमो नड्वलायां[18] महौजसः[19] । पुरोरजनयत्पुत्रान्षडाग्नेयी महाप्रभान् ॥ १९
अङ्गं सुमनसं स्वातिं[20] क्रतुमङ्गिरसं मयम्[21] । अङ्गात्सुनीथाऽपत्यं वै वेण(न)मेकं व्यजायत ॥ २०
अपचारेण वेण(न)स्य प्रकोपः सुमहानभूत् । प्रजार्थमृषयो यस्य ममन्थुर्दक्षिणं करम् ॥ २१
वेण(न)स्य मथिते पाणौ संबभूव महान्नृपः[22] । तं दृष्ट्वा मुनयः प्राहुरेष वै मुदिताः प्रजाः ॥ २२
करिष्यति महातेजा यशश्च प्राप्स्यते महत् । स धन्वी कवची जातो[23] ज्वलज्ज्वलनसंनिभः ॥ २३
पृथुर्वैण्य(न्य)स्तथा [24]चेमां ररक्ष क्षत्र[25]पूर्वजः । राजसूयाभिषिक्तानामाद्यः स वसुधाधिपः ॥ २४
तस्माच्चैव समुत्पन्नौ निपुणौ सूतमागधौ । [26]तेनेयं गौर्मुनिश्रेष्ठा दुग्धा सस्यानि भूभृता ॥ २५
प्रजानां वृत्तिकामेन [27]देवैः सर्षिगणैः सह । पितृभिर्दानवैश्चैव गन्धर्वै[28]रप्सरो[29]गणैः ॥ २६
सर्पैः पुण्यजनैश्चैव वीरुद्भिः पर्वतैस्तथा । तेषु तेषु च पात्रेषु दुह्यमाना वसुंधरा ॥ २७
प्रादाद्यथेप्सितं क्षीरं तेन प्राणानधारयन् । पृथोस्तु पुत्रौ धर्मज्ञौ यज्ञान्तेऽन्तार्धिपातिनौ ॥ २८
शिखण्डिनी हविर्धानमन्तर्धानाद्व्यजायत । हविर्धानात्षडाग्नेयी[30] धिषणाऽजनयत्सुतान् ॥ २९
प्राचीनबर्हिषं शुक्रं गयं कृष्णं व्रजाजिनौ । प्राचीनबर्हिर्भगवान्महानासीत्प्रजापतिः ॥ ३०
हविर्धानान्मुनिश्रेष्ठा येन संवर्धिताः प्रजाः+ । प्राचीनबर्हिर्भगवान्पृथिवीतलचारिणीः[31] ॥ ३१
समुद्रतनयायां [32]तु कृतदारोऽभवत्प्रभुः । महतस्तपसः पारे सवर्णायां प्रजापतिः ॥ ३२
सवर्णाऽऽधत्त सामुद्री दश प्राचीनबर्हिषः । सर्वान्प्रचेतसो नाम धनुर्वेदस्य पारगान् ॥ ३३
अपृथग्धर्मचरणास्तेऽतप्यन्त महत्तपः । दश वर्षसहस्राणि समुद्रसलिलेशयाः ॥ ३४

* संधिरत्राऽऽर्षः ।+ ग. पुस्तक एतदग्रे 'प्राचीनाग्रकुशास्तस्य पृथिव्यां द्विजसत्तमाः' इत्यर्धमधिकं दृश्यते ।

१ ग. °स्रान्ते त्रीं° । २ ग. °णि वर्षाणि भो° । ३ ख °नवृद्धि । ४ ख. वै । ५ क. ग. °स्मात्सृष्टिं । ६ क. °त । सृष्टे° । ७ क. °या मन्त्रपूतान° । ८ ख. °पुंजयं पुरंजयं पुत्रं च वृ° । ९ ग. विप्रं । १० क. ग. चाक्षुषं । ११ क. ग. °जायामरण्यस्य । १२ ख. नद्वला° । १३ क. रुरुः । ग. ऊरुः । १४ ग. पूरुः । १५ ख. °ष्टुवति° । १६ ख. °म्नश्चापि ते । १७ क. अभिम° । १८ ख. नद्वला° । १९ ग. °सः । ऊरो° । २० ख. ख्यार्ति । २१ क. ग. गयम् । २२ ग. °हानृषिः । तं । २३ क. राजा । २४ क. वेमां । २५ ख. दक्षपूर्वजः । २६ ख. तेन पृथ्वी मुनि° । २७ क. देवैर्महर्षिग° । २८ ख. °न्धर्वाप्स° । २९ ख. °प्सरसां ग° । ३० क. °यी पुण्यानज° । ३१ क. ग. °रिणः । स° । ३२ क. च ।

तपश्चरत्सु पृथिवीं प्रचेतःसु महीरुहाः । अरक्ष्यमाणामावव्रुर्बभूवाथ प्रजाक्षयः ॥ ३५
नाशकन्मारुतो वातुं वृतं[1] खमभवद्द्रुमैः । दश वर्षसहस्राणि न शेकुश्चेष्टितुं[2] प्रजाः ॥ ३६
तदुपश्रुत्य तपसा युक्ताः सर्वे प्रचेतसः । मुखेभ्यो वायुमग्निं च ससृजुर्जातमन्यवः ॥ ३७
उन्मूलान[3]थ[4] वृक्षांस्तु कृत्वा वायुरशोषयत्[5] । तानग्निरदहद्घोर[6] एवमासीद्द्रुमक्षयः ॥ ३८
द्रुमक्षयमथो बुद्ध्वा[7] किंचिच्छिष्टेषु[8] शाखिषु । उपगम्याब्रवीदेतां[9]स्तदा सोमः प्रजापतीन् ॥ ३९
कोपं यच्छत राजानः सर्वे प्राचीनबर्हिषः । वृक्षशून्या कृता पृथ्वी शाम्येतामग्निमारुतौ ॥ ४०
रत्नभूता च कन्येयं वृक्षाणां वरवर्णिनी । भविष्यं जानतां[10] तात धृता गर्भेण वै मया ॥ ४१
मारिषा नाम नाम्नैषा वृक्षाणामिति निर्मिता । भार्या वोऽस्तु महाभोगा[11]ः सोमवंशविवर्धिनी ४२
युष्माकं तेजसोऽर्धेन मम चार्धेन तेजसः । अस्यामुत्पत्स्यते विद्वान्दक्षो नाम प्रजापतिः ॥ ४३
स इमां दग्धभूयिष्ठां युष्मत्तेजोमयेन वै । अग्निनाऽग्निसमो भूयः प्रजाः संवर्धयिष्यति ॥ ४४
ततः सोमस्य वचनाज्जगृहुस्ते [12]प्रचेतसः । संहृत्य कोपं [13]वृक्षेभ्यः पत्नीं धर्मेण मारिषाम् ॥ ४५
दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः । दक्षो जज्ञे महातेजाः सोम[14]स्यांशेन भो द्विजाः ४६
अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदः । स सृष्ट्वा[15] मनसा[16] दक्षः पश्चा[17]दसृजत स्त्रियः ॥ ४७
ददौ[18] दश स धर्माय कश्यपाय त्रयोदश । शिष्टाः सोमाय राज्ञे च[19] नक्षत्राख्या ददौ प्रभुः ४८
तासु देवाः खगा गावो नागा दितिजदानवाः । गन्धर्वाप्सरसश्चैव जज्ञिरेऽन्याश्च जातयः ॥ ४९
ततः प्रभृति विप्रेन्द्राः प्रजा मैथुनसंभवाः । संकल्पाद्दर्शनात्स्पर्शात्पूर्वेषां प्रोच्यते प्रजा ॥ ५०

[20]मुनय ऊचुः—

देवानां दानवानां च गन्धर्वोरगरक्षसाम् । संभवस्तु श्रुतोऽस्माभिर्दक्षस्य च महात्मनः ॥ ५१
अङ्गुष्ठा[21]द्ब्रह्मणो[22] जज्ञे दक्षः किल शुभव्रतः । वामाङ्गुष्ठात्तथा चैवं तस्य पत्नी व्यजायत ॥ ५२
कथं प्राचेतसत्वं स[23] पुनर्लेभे महातपाः । ए[24]तं नः संशयं सूत व्याख्यातुं[25] त्वमिहार्हसि ॥
दौहित्रश्चैव सोमस्य कथं श्वशुरतां गतः ॥ ५३

लोमहर्षण उवाच—

उत्पत्तिश्च [26]निरोधश्च नित्यं भूतेषु भो द्विजाः । ऋषयोऽत्र न मुह्यन्ति विद्यावन्तश्च ये जनाः ॥
युगे युगे भवन्त्येते[27] पुनर्दक्षादयो नृपाः । पुनश्चैव [28]निरुध्यन्ते विद्वांस्तत्र न मुह्यति[29] ॥ ५५
ज्यैष्ठ्यं कानिष्ठमप्येषां पूर्वं नाऽऽसीद्द्विजोत्तमाः । तप एव गरीयोऽभूत्प्रभावश्चैव कारणम् ॥ ५६
[30]इमां विसृष्टिं दक्षस्य यो विद्यात्सचराचराम्[31] । प्रजावानायुरुत्तीर्णः स्वर्गलोके महीयते* ॥ ५७

इति श्रीमहापुराणे ब्राह्मे सृष्टिकथनं नाम द्वितीयोऽध्यायः ॥ २ ॥

श्लोकानामादितः समष्ट्यङ्काः—११३

---

* क. ग. पुस्तकयोरत्र प्रथमाध्यायसमाप्तिः ।

---

१ ख. °तं सम° । २ क. °कुश्चषितुं । ३ क. °लान्स ततो वृक्षान्कृत्वा । ४ ख. °थ तान्वृक्षान्कृत्वा । ५ क. °त् । दिव्याग्नि° । ६ ग. °रमेव° । ७ क. दृष्ट्वा । ८ क. °षु भो द्विजाः । उ° । ९ ग. °देतान्राजा सो° । १० क. ख. °ता सातु धृ° । ११ ग. °भागा सो° । १२ ख. तपोधनाः । १३ क. वृक्षेषु । १४ क. °मस्याऽऽत्मसमो द्वि° । १५ क. °ष्ट्वा मानसान्दक्षः । १६ क. °सा भूयः प° । १७ ख. °श्चात्सृजन्स्त्रियः । १८ क. ख. °दौ स दश ध° । १९ क. ख. तु । २० क. ऋषय । २१ ग. °ष्ठाद्दक्षिणाज्जातो द° । २२ क. °णो जातो द° । २३ ग. च । २४ क. एवं । ख. एनं तु सं° । २५ ख. °तुं वै त्वमर्ह° । २६ क. विपत्तिश्च । २७ क. ख. °ते सर्वे दक्षा° । २८ क. विपद्यन्ते । २९ क. °ति । जन्म चैव विपत्तिश्च पू° । ३० क. °मां तु सृ° । ३१ क. ग. °चरम् ।

अथ तृतीयोऽध्यायः ।

मुनय ऊचुः—

देवानां दानवानां च गन्धर्वोरगरक्षसाम् । उत्पत्तिं विस्तरेणैव लोमहर्षण कीर्तय ॥ १

[1]लोमहर्षण उवाच—

प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयंभुवा । यथा ससर्ज भूतानि तथा शृणुत भो द्विजाः ॥२
मानसान्येव भूतानि[3] पूर्वमेवासृजत्प्रभुः । ऋषीन्देवान्सगन्धर्वानसुरान्यक्षराक्षसान् ॥ ३
यदाऽस्य मानसी [4]विप्रा न व्यवर्धत वै प्रजा । तदा संचिन्त्य धर्मात्मा प्रजाहेतोः प्रजापतिः ४
स मैथुनेन धर्मेण सिसृक्षुर्विविधाः प्रजाः । असिक्नीमावहत्पत्नीं वीरणस्य प्रजापतेः ॥ ५
सुतां सुतपसा युक्तां महतीं लोकधारिणीम् । अथ पुत्रसहस्राणि वैरण्यां पञ्च वीर्यवान् ॥ ६
असिक्न्यां जनयामास दक्ष एव प्रजापतिः । तांस्तु दृष्ट्वा महाभागान्संविवर्धयिषून्प्रजाः ॥ ७
देवर्षिः प्रियसंवादो नारदः प्राब्रवीदिदम् । नाशाय वचनं तेषां शापायैवाऽऽत्मनस्तथा ॥ ८
यं कश्यपः सुतवरं परमेष्ठी व्यजीजनत् । दक्षस्य वै दुहितरि दक्षशापभयान्मुनिः ॥ ९
पूर्वं स हि समुत्पन्नो नारदः परमेष्ठिनः । असिक्न्यामथ [8]वैरण्यां भूयो देवर्षिसत्तमः ॥ १०
तं भूयो जनयामास [9]पितेव [10]मुंनिपुंगवम् । तेन दक्षस्य वै पुत्रा हर्यश्वा इति विश्रुताः ॥ ११
निर्मथ्य नाशिताः सर्वे विधिना च न संशयः । तस्योद्यतस्तदा दक्षो नाशायामितविक्रमः॥१२
ब्रह्मर्षीन्पुरतः कृत्वा याचितः परमेष्ठिना । ततोऽभिसंधिश्चक्रे[11] वै दक्षस्य परमेष्ठिना ॥ १३
कन्यायां नारदो[12] मह्यं तव पुत्रो भवेदिति । ततो दक्षः सुतां प्रादात्प्रियां वै परमेष्ठिने ॥
स तस्यां नारदो जज्ञे भूयः शापभयादृषिः ॥ १४

[13]मुनय ऊचुः—

कथं प्रणाशिताः पुत्रा नारदेन महर्षिणा । प्रजा[14]पतेः सूतवर्य श्रोतुमिच्छाम तत्त्वतः ॥ १५

लोमहर्षण उवाच—

दक्षस्य पुत्रा[15] हर्यश्वा विवर्धयिषवः प्रजाः । समागता महावीर्या नारदस्तानुवाच ह ॥ १६

नारद उवाच—

बालिशा बत यूयं[16] वै नास्या जानीत वै भुवः । प्रमाणं स्रष्टुकामा वै प्रजाः प्राचेतसात्मजाः१७
अन्तरूर्ध्वमधश्चैव कथं स्रक्ष्य[17]थ वै प्रजाः । ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतो [18]दिशः । १८
अद्यापि न निवर्तन्ते समुद्रेभ्य इवाऽऽपगाः । हर्यश्वेष्वथ नष्टेषु दक्षः प्राचेतसः पुनः ॥ १९
वैरण्यामथ पुत्राणां सहस्रमसृजत्प्रभुः । विवर्धयिषवस्ते तु शबलाश्वास्तथा प्रजाः ॥ २०
पूर्वोक्तं वचनं[21] ते तु नारदेन प्रचोदिताः । अन्योन्यमूचुस्ते सर्वे सम्यगाह महानृषिः ॥ २१
भ्रातॄणां पदवीं ज्ञातुं गन्तव्यं नात्र संशयः । ज्ञात्वा प्रमाणं पृथ्व्याश्च सुखं स्रक्ष्यामहे प्रजाः२२
तेऽपि तेनैव मार्गेण प्रयाताः सर्वतो दिशम् । अद्यापि न निवर्तन्ते समुद्रेभ्य इवाऽऽपगाः ॥२३

१ क. सूत । २ क. ग. पूर्वद° । ३ ख. °नि प्रजापतिरवासृजत् । ऋ° । ४ क. °र्वाप्सराप्यक्षांश्च रा° । ५ ख. तात । ६ ख. जुष्टां । ७ क. वीरण्यां ख. वीरिण्यां । ८ क. ख. वीरिण्यां । ९ क. पीवर्यो । १० क. मुनिपुंगवः । ११ ग. °संधिं चक्रे । १२ क. °दोऽपत्यं त° । १३ क. ऋषय । १४ क. ख. °पतेस्तु भगवञ्श्रोतु° । १५ क. °भ्रास्ते सर्वे वि° । १६क. भूयो । १७ क. रक्षथ । १८ ख. दिशम् । १९ क. °नः । वीरिण्या° । २० ग. °वनास्ते तु । २१ क. ख. °देनैव चो° । २२ क. °हामुनिः । भ्रा° ।

तदा प्रभृति वै भ्राता भ्रातुरन्वेषणे [1]द्विजाः । प्रयातो नश्यति क्षिप्रं तन्न कार्यं विपश्चिता॥ २४
तांश्चैव नष्टान्विज्ञाय पुत्रान्दक्षः प्रजापतिः । षष्टिं ततोऽसृजत्कन्या[2] वैरण्यामिति नः श्रुतम्॥ २५
तास्तदा प्रतिजग्राह [3]भार्यार्थं कश्यपः प्रभुः । सोमो धर्मश्च भो विप्रास्तथैवान्ये महर्षयः ॥ २६
ददौ स दश धर्माय कश्यपाय त्रयोदश । *सप्तविंशति सोमाय चतस्रोऽरि[4]ष्टनेमिने ॥ २७
द्वे चैव बहुपुत्राय द्वे चैवाङ्गिरसे तथा । द्वे कृशाश्वाय विदुषे तासां नामानि[5] मे शृणु ॥ २८
अरुन्धती वसु[6]र्यामी [7]लम्बा भानुर्मरुत्वती । संकल्पा च मुहूर्ता च साध्या विश्वा च भो द्विजाः ॥
धर्मपत्न्यो दश त्वेतास्तास्वपत्यानि[8] बोधत । विश्वेदेवास्तु विश्वायाः साध्या साध्यान्व्यजायत
मरुत्वत्यां मरुत्वन्तो वसोस्तु वस[9]वः [10]सुताः । भानोस्तु भानवः पुत्रा मुहूर्तास्तु मुहूर्तजाः ॥ ३१
लम्बायाश्चैव [11]घोषोऽथ नागवीथी च [12]यामिजा । [13]पृथिवी विषयं सर्वमरुन्धत्यां व्यजायत ॥ ३२
संकल्पा[14]यास्तु वि[15]श्वात्मा जज्ञे संकल्प एव हि । नाग[16]वीथ्यां च यामि[17]न्यां वृषलश्च व्यजायत(?)॥
परा याः सोमपत्नीश्च दक्षः प्राचेतसो ददौ । सर्वा नक्षत्रनाम्न्यस्ता ज्योतिषे परिकीर्तिताः ३४
ये त्वन्ये ख्यातिमन्तो वै देवा ज्योतिष्पुरोगमाः । वसवोऽष्टौ समाख्यातास्तेषां वक्ष्यामि विस्तरम्
आपो ध्रुवश्च सोम[18]श्च [19]धवश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवो नामभिः स्मृताः ॥ ३६
आपस्य पुत्रो [20]वैतण्ड्यः श्रमः [21]श्रान्तो मुनिस्तथा । ध्रुवस्य पुत्रो भगवान्कालो लोकप्र[22]कालनः ३७
सोमस्य भगवान्वर्चा वर्चस्वी येन जायते । [23]धवस्य पुत्रो द्रविणो हुतहव्यवहस्तथा ॥
मनोहरायाः शिशिरः प्राणोऽथ रमणस्तथा ॥ ३८
अनिलस्य शिवा भार्या तस्याः पुत्रो मनोजवः । अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य [24]च ॥ ३९
अग्निपुत्रः कुमारस्तु शरस्त[25]म्बे श्रिया वृतः । तस्य शाखो विशाखश्च नैगमेयश्च [26]पृष्ठजः ॥ ४०
अपत्यं कृत्तिकानां तु कार्तिकेय इति स्मृतः । प्रत्यूषस्य विदुः पुत्रमृषिं नाम्नाऽथ देवलम्॥ ४१
द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ । बृहस्पतेस्तु भगिनी वरस्त्री [27]ब्रह्मवादिनी ॥ ४२
[28]योगसिद्धा जगत्कृत्स्न[29]म[30]सक्ता विचचार ह । प्रभासस्य तु सा भार्या वसूनामष्टमस्य [31]तु ॥ ४३
विश्वकर्मा महाभागो [32]यस्यां [33]जज्ञे [34]प्रजापतिः । कर्ता शिल्पसहस्राणां त्रिदशानां च वार्धकिः ४४
भूषणानां च सर्वेषां कर्ता शिल्पवतां वरः । यः सर्वेषां विमानानि दैवतानां चकार ह ॥ ४५
मानुषाश्चोपजीवन्ति यस्य शिल्पं महात्मनः । [35]सुरभी कश्यपाद्रुद्रानेकादश विनिर्ममे ॥ ४६
महादेवप्रसादेन तपसा भाविता सती । अजैकपादहिर्बु[36]ध्न्यस्त्वष्टा रुद्रश्च वीर्यवान् ॥ ४७
हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः । वृषाकपिश्च शंभुश्च कपर्दी रैवतस्तथा ॥ ४८

---

* क्रियाविशेषणम् । सप्तविंशतिं सोमायेत्यत्र तूचितम् ।

---

१ क. ख. रतः । २ क. °न्या वीरिण्या° । ख. °न्या वैरिण्या° । ३ क. भार्यार्थे । ग. भार्यात्वे । ४ ग. °रिचने° । ५ ख. °नि बोधत । अ° । ६ ख. °सुर्जामी । ७ ग. नंश्वा । ८ ग. नि यानि च । वि° । ९ क. °सवस्तथा । भा° । १० ख. स्मृताः । ११ ख. घोषश्च । १२ ख. जामिजा । १३ ख. °थिव्या विषये स° । १४ क. °ल्पायां तु सर्वात्मा । १५ख. सर्वात्मा । १६ ख. °वीथी च जामि° । १७ ख. °न्यां विश्वा विश्वान्व्यजा° । १८ क. °श्च बलश्चै° । १९ ख. धरश्चै° । २० क. वैतण्डः । २१ ग. शान्तो । २२ ग. °काशनः । २३ क. बलस्य । ख. धरस्य । २४ ख. तु । २५ ख. °म्बेषु यो धृतः । २६ क. पृष्ठतः । २७ ग. °ह्मचारिणी । यो° । २८ क. तपःसिद्धा । २९ क. °मभ्रान्ता वि° । ३० ख. °सक्तं वि° । ३१ ख. हि । ३२ क यस्या । ३३ ख. जातः । ३४ ख. सुवर्धाकिः । ३५ ख.सुराभिः । ३६ क. °बुंध्रस्त्व° ।

मृगव्याधश्च शर्वश्च कपाली च द्विजोत्तमाः । एकादशैते विख्याता रुद्रास्त्रिभुवनेश्वराः ॥ ४९
शतं त्वेवं समाख्यातं रुद्राणाममितौजसाम् । पुराणे मुनिशार्दूला यैर्व्याप्तं सचराचरम् ॥ ५०
दाराञ्शृणुध्वं विप्रेन्द्राः कश्यपस्य प्रजापतेः । अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा खसा ॥ ५१
सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा । कद्रुर्मुनिश्च भो विप्रास्तास्वपत्यानि बोधत ॥ ५२
पूर्वमन्वन्तरे श्रेष्ठा द्वादशाऽऽसन्सुरोत्तमाः । तुषिता नाम तेऽन्योन्यमूचुर्वैवस्वतेऽन्तरे ॥ ५३
उपस्थितेऽतियशसश्चाक्षुषस्यान्तरे मनोः । हितार्थं सर्वलोकानां समागम्य परस्परम् ॥ ५४
आगच्छत द्रुतं देवा अदितिं संप्रविश्य वै । मन्वन्तरे प्रसूयामस्तन्नः श्रेयो भविष्यति ॥ ५५

लोमहर्षण उवाच—

एवमुक्त्वा तु ते सर्वे चाक्षुषस्यान्तरे मनोः । मारीचात्कश्यपाज्जातास्त्वदित्या दक्षकन्यया ॥ ५६
तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव हि । अर्यमा चैव धाता च त्वष्टा पूषा तथैव च ॥ ५७
विवस्वान्सविता चैव मित्रो वरुण एव च । अंशो भगश्चातितेजा आदित्या द्वादश स्मृताः* ॥
+सप्तविंशति याः प्रोक्ताः सोमपत्न्यो महाव्रताः । तासामपत्यान्यभवन्दीप्तान्यमिततेजसः ॥ ५९
अरिष्टनेमिपत्नीनामपत्यानीह षोडश । बहुपुत्रस्य विदुषश्चतस्रो [3]विद्युतः स्मृताः ॥ ६०
चाक्षुषस्यान्तरे पूर्वे ऋचो ब्रह्मर्षिसत्कृताः । कृशाश्वस्य च देवर्षेर्देवप्रहरणाः स्मृताः ॥ ६१
एते युगसहस्रान्ते जायन्ते पुनरेव हि । सर्वे देवगणाश्चात्र त्रयस्त्रिंशत्तु कामजाः ॥ ६२
तेषामपि च भो विप्रा निरोधोत्पत्तिरुच्यते । यथा सूर्यस्य गगन उदयास्तमयाविह ॥ ६३
एवं देवनिकायास्ते संभवन्ति युगे युगे । दित्याः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतम् ॥ ६४
हिरण्यकशिपुश्चैव हिरण्याक्षश्च वीर्यवान् । सिंहिका चाभवत्कन्या विप्रचित्तेः परिग्रहः ॥ ६५
सैंहिकेया इति ख्याता यस्याः पुत्रा महाबलाः । *हिरण्यकशिपोः पुत्राश्चत्वारः प्रथितौजसः
ह्लादश्च अनुह्लादश्च प्रह्लादश्चैव वीर्यवान् । संह्लादश्च चतुर्थोऽभूद्ध्रादपुत्रो ह्रदस्तथा ॥ ६७
ह्रदस्य पुत्रौ द्वौ वीरौ शिवः कालस्तथैव च । विरोचनश्च प्राह्लादिर्बलिर्जज्ञे विरोचनात् ॥ ६८
बलेः पुत्रशतं त्वासीद्बाणज्येष्ठं तपोधनाः । धृतराष्ट्रश्च सूर्यश्च चन्द्रमाश्चन्द्रतापनः ॥ ६९
कुम्भनाभो गर्दभाक्षः कुक्षिरित्येवमादयः । बाणस्तेषामतिबलो ज्येष्ठः पशुपतेः प्रियः ॥ ७०
पुरा कल्पे तु बाणेन प्रसाद्योमापतिं प्रभुम् । पार्श्वतो विहरिष्यामि इत्येवं याचितो वरः ॥ ७१
हिरण्याक्षसुताश्चैव विद्वांसश्च महाबलाः । [11]भर्भरः शकुनिश्चैव भूतसंतापनस्तथा ॥ ७२
[12]महोनाभश्च विक्रान्तः कालनाभस्तथैव च । अभवन्दनुपुत्राश्च शतं तीव्रपराक्रमाः ॥ ७३
तपस्विनो महावीर्याः प्राधान्येन ब्रवीमि तान् । द्विमूर्धा शङ्कुकर्णश्च तथा [13]हयशिरा विभुः ॥ ७४

---

* एतदनन्तरम्—'चाक्षुषस्यान्तरे पूर्वमासंस्ते तुषिताः सुराः । वैवस्वतेऽन्तरे ते वा आदित्या द्वादश स्मृताः' इति श्लोकः क. ख. पुस्तकयोरधिकोऽस्ति । + क्रियाविशेषणं कथंचित् । सप्तविंशतिर्या इत्येव तूचितम् । * इत आरभ्याग्रे महाबला इत्यन्तं ग. पुस्तके नास्ति ।

---

१ ख. °दशेति वि° । २ ग. °सानामतिते° । ३ क. वैद्युताः । ४ ग. °ताः । प्रत्यङ्गिरसवाः श्रेष्ठा ऋ° । ५ क. पूर्वमृभवो वीतिस° । ६ क. °मने त्विह । ख. °मने इह । ७ ख. दित्यां । ८ ख. पुत्रोऽप्यायुर्वै शि° । ९ क. गर्दभश्च । १० ख. °सुताः पञ्च वि° । ११ ख. ऊर्जराः । ग. त्र्यर्कविः । १२ क. °हागर्भश्च । ख. °हाभागश्च । १३ क. ख. शङ्कुशिरा । १४ क. द्विजाः ।

अयोमुखः शम्बरश्च कपिलो वामनस्तथा । *मारीचिर्मघवांश्चैव इल्वलः स्वसृमस्तथा ॥ ७५
विक्षोभणश्च केतुश्च केतुवीर्यशतह्रदौ । इन्द्रजित्सर्वजिच्चैव वज्रनाभस्तथैव च ॥ ७६
[1]एकचक्रो महाबाहु[2]स्तारकश्च महाबलः । वैश्वानरः पुलोमा च विद्रावणमहाशिराः ॥ ७७
स्वर्भानुर्वृषपर्वा च विप्रचित्तिश्च वीर्यवान् । सर्व एते दनोः पुत्राः कश्यपादभिजज्ञिरे ॥ ७८
विप्रचित्तिप्रधानास्ते दान[3]वाः सुमहाबलाः । एते[4]षां पुत्रपौत्रं तु न तच्छक्यं द्विजोत्तमाः ॥ ७९
प्रसंख्यातुं बहुत्वाच्च पुत्रपौत्रमनन्तकम् । स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु शची सुता ॥ ८०
उप[5]दीप्तिर्हयशिराः शर्मिष्ठा वार्षपर्वणी । पुलोमा कालिका चैव वैश्वानरसुते उभे ॥ ८१
बह्वपत्ये [6]महापत्ये[7] मरीचेस्तु परिग्रहः । तयोः पुत्रसहस्राणि ष[8]ष्टिर्दानवनन्दनाः ॥ ८२
चतुर्दशशतानन्यान्हिरण्यपुरवासिन[9]ः । मरीचिर्जनयामास महता तपसाऽन्वितः ॥ ८३
पौलोमाः कालकेयाश्च दानवास्ते महाबलाः । अवध्या देवतानां हि हिरण्यपुरवासिनः ॥ ८४
पितामहप्रसादेन ये हताः सव्यसाचिना । ततोऽपरे महावीर्या दानवास्त्वतिदारुणाः ॥ ८५
सिंहिकायामथोत्पन्ना विप्रचित्तेः सुतास्तथा । दैत्यदानवसंयोगाज्जातास्तीव्रपराक्रमाः ॥ ८६
[10]सैंहिकेया इति ख्यातास्त्रयोदश महाबला[11]ः । वंश्यः शल्यश्च [12]बलिनौ नलश्चैव तथा बलः ॥ ८७
वाता[13]पिर्नमुचिश्चैव इल्वल[14]ः स्वसृमस्तथा । [15]अञ्जिको नरकश्चैव कालनाभस्तथैव च ॥ ८८
सरमा[16]नस्तथा चैव स्वरकल्पश्च वीर्यवान्+ । एते वै[17] दान[18]वाः श्रेष्ठा दनोर्वंशविवर्धनाः ॥ ८९
तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः । संह्रादस्य तु दैत्यस्य निवातकवचाः कुले ॥ ९०
समुत्पन्नाः सुमहता तपसा भावितात्मनः । तिस्रः कोट्यः सुतास्तेषां मणिवत्यां निवासिनः ९१
अवध्यास्तेऽपि देवानामर्जुनेन निपातिताः । षट्सुताः सुमहाभागास्ताम्रायाः परिकीर्तिताः ९२
[19]क्रौञ्ची श्येनी च भासी च सुग्रीवी शुचिगृध्रिका । [20]क्रौञ्ची[21] तु जनयामास उलूकप्रत्युलूककान् ॥
श्येनी श्येनांस्तथा भासी भासान्गृध्रांश्च गृध्र्यपि । शुचिरौदकान्पक्षिगणान्सुग्रीवी तु द्विजोत्तमाः
अश्वानुष्ट्रान्गर्दभांश्च ताम्रावं[22]शः प्रकी[23]र्तितः । विनताया[24]स्तु द्वौ पुत्रौ विख्यातौ गरुडारुणौ ॥ ९५
ग[25]रुडः पततां श्रेष्ठो दारुणः स्वेन कर्मणा । सुरसायाः सहस्रं तु सर्पाणाममितौजसाम् ॥ ९६
अनेकशिरसां विप्राः खचराणां महात्मनाम् । काद्रवेयास्तु बलिनः सहस्रममितौजसः ॥ ९७
सुपर्णवशगा नागा जज्ञिरे नैकमस्तकाः । येषां प्रधानाः सततं शेषवासुकितक्षकाः ॥ ९८
ऐरावतो महापद्मः कम्बलाश्वतरावुभौ । एलापत्रश्च शङ्खश्च कर्कोटकधनंजयौ ॥ ९९
महानीलमहाकर्णौ धृतराष्ट्र[26]बलाहकौ । कुहरः पुष्पदंष्ट्रश्च दुर्मुखः सुमुखस्तथा ॥ १००

---

* इदमर्धं क. ख. पुस्तकयोर्नास्ति । + एतदनन्तरम्—"मूकश्चैव तु हुण्डश्च ह्रदपुत्रौ बभूवतुः । मारीचः सुन्दपुत्रस्तु प्रस्तुतायां व्यजायत । शरमानस्तथा चैव शरकल्कश्च वीर्यवान्" । इति सार्धः श्लोकोऽधिकः ख. पुस्तके ।

---

१ ख. एकवक्त्रो । २ ग. °हुस्थावरश्च । ३ क. °नवा वै म° । ४ ख. °षां यदपत्यं तु । ५ ख. ग. °पदानवी हय° । ६ क. ख. महासत्त्वे । ७ ग. °त्ये मारी° । ८ क. °ष्टिश्च दितिन° । ९ ग. °नः । मारी° । १० क. कालकेया । ११ क. °लाः । विश्वः स्वल्पश्च । ख. °लाः । शतं शताश्चब° । १२ ग. वलयो । १३ क. ख. °तापी नमु° । १४ क. °ल्वलेयः स्मृतस्त° । १५ क. अजितो । १६ क. °मानामतश्चैव । १७ क. तु । १८ क. °नवश्रे° । १९ ख. क्रुची । २० ख. क्रुची । २१ ग. °ञ्ची क्रौञ्चानजनयदुलू° । २२ ख. ग. °वंशाः प्र° । २३ ख. ग. °र्तिताः । वि° । २४ क. ख. °याश्च पुत्रौ द्वावरुणो गरुडस्तथा । सु° । २५ ख. ग. सुपर्णः । २६ क. °ष्ट्रमहाबलौ । कु° ।

शङ्खश्च शङ्खपालश्च कपिलो[1] वामनस्तथा । नहुषः शङ्खरोमा च मणिरित्येवमादयः ॥ १०१
तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः । चतुर्दशसहस्राणि[2] क्रूराणामनिलाशिनाम् ॥ १०२
गणं(णः) क्रोधवशं(शो) विप्रास्तस्य सर्वे च दंष्ट्रिणः । स्थलजाः पक्षिणोऽब्जाश्च धरायाः प्रसवाः स्मृताः ॥ १०३
गास्तु वै जनयामास सुरभिर्महिषीस्तथा[3] । इरा वृक्षलता वल्लीस्तृणजातीश्च सर्वशः[4] ॥ १०४
खसा तु यक्षरक्षांसि मुनिरप्सरसस्तथा । अरिष्टा तु महासिद्धा[5] गन्धर्वानमितौजसः ॥ १०५
एते कश्यपदायादाः कीर्तिताः स्थाणुजङ्गमाः । येषां[6] पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः १०६
एष[7] मन्वन्तरे विप्राः सर्गः[8] स्वारोचिषे स्मृतः[9] । वैवस्वतेऽतिमहति वारुणे वितते क्रतौ ॥ १०७
जुह्वानस्य ब्रह्मणो वै प्रजासर्ग इहोच्यते । पूर्वं यत्र समुत्पन्नान्ब्रह्मर्षीन्सप्त मानसान् ॥ १०८
पुत्रत्वे कल्पयामास स्वयमेव पितामहः । ततो विरोधे[10] देवानां दानवानां च भो द्विजाः ॥१०९
दितिर्विनष्टपुत्रा वै तोषयामास कश्यपम् । कश्यपस्तु प्रसन्नात्मा सम्यगाराधितस्तया ॥ ११०
वरेण च्छन्दयामास सा च वव्रे वरं तदा । पुत्रमिन्द्रवधार्थाय समर्थममितौजसम् ॥ १११
स च तस्मै वरं प्रादात्प्रार्थितः सुमहातपाः । दत्त्वा च वरमत्युग्रो[11] मारीचः[12] समभाषत ॥ ११२
इन्द्रं पुत्रो निहन्ता ते गर्भं वै शरदां शतम् । यदि धारयसे शौचतत्परा व्रतमास्थिता ॥ ११३
तथेत्यभिहितो भर्ता तया देव्या महातपाः । धारयामास गर्भं तु शुचिः सा मुनिसत्तमाः ११४
ततोऽभ्युपागमद्[13]दित्यां गर्भमाधाय कश्यपः । रोधयन्वै गणं श्रेष्ठं देवानाममितौजसम् ॥ ११५
तेजः संहृत्य दुर्धर्षमवध्यममरैरपि । जगाम पर्वतायैव तपसे संशितव्रता[14] ॥ ११६
तस्याश्चैवान्तरप्रेप्सुरभवत्पाकशासनः । जाते[15] वर्षशते चास्या ददर्शान्तरमच्युतः ॥ ११७
अकृत्वा पादयोः शौचं दितिः शयनमाविशत् । निद्रां चाऽऽहारयामास तस्यां कुक्षिं प्रविश्य सः[16]
वज्रपाणिस्ततो गर्भं सप्तधा तं न्यकृन्तयत् । स पाट्यमानो गर्भोऽथ वज्रेण प्ररुरोद ह ॥ ११९
मा रोदीरिति तं शक्रः पुनः पुनरथाब्रवीत्[17] । सोऽभवत्सप्तधा गर्भस्तमिन्द्रो रुषितः पुनः १२०
एकैकं सप्तधा चक्रे वज्रेणैवारिकर्षणः । मरुतो नाम ते देवा[18] बभूवुर्द्विजसत्तमाः ॥ १२१
यथोक्तं वै मघवता तथैव मरुतोऽभवन् । देवाश्चैकोनपञ्चाशत्सहाया वज्रपाणिनः ॥ १२२
तेषामेवं प्रवृत्तानां भूतानां द्विजसत्तमाः । रोचयन्वै गणश्रेष्ठान्देवानाममितौजसाम् ॥ १२३
निकायेषु निकायेषु हरिः[19] प्रादात्प्रजापतीन्[20] । क्रमशस्तानि राज्यानि पृथुपूर्वाणि भो द्विजाः ॥
स हरिः पुरुषो वीरः कृष्णो जिष्णुः प्रजापतिः । पर्जन्यस्तपनो[21][22]ऽनन्तस्तस्य सर्वमिदं जगत् ॥
भूतसर्गमिमं सम्यग्जानतो द्विजसत्तमाः । नाऽऽवृत्तिभयमस्तीह परलोकभयं कुतः[23] ॥ १२६

इति श्रीमहापुराणे ब्राह्मे देवासुराणामुत्पत्तिकथनं नाम तृतीयोऽध्यायः ॥ ३ ॥

श्लोकानामादितः समष्ट्यङ्काः—२३७

---

१ ख. °लो मानसस्त° । २ क. °णि सर्पाणा° । ३ ग. °हिषांस्त° । ४ क. °शः । सरमा य° । ५ क. ख. महासत्त्वा । ६ क. तेषां । ७ क. एवं । ८ क. सर्वे । ९ क. स्मृताः । १० ख.ग. विरोधो । ११ ख. °मत्यग्रो । १२ ख. °रीचस्ताम° । १३ क. °पायमाधाय गर्भनाशाय वासवः । ते° । १४ क. °व्रतः । त° । १५ क. ऊने । १६ ग. ह । १७ क. °नरुत्राव ह । सोऽ° । १८ ख. बाला । १९ क. हरिं । ग. हविः । २० क. °पतिम् । क्र° । ग. °पतिः । क्र° । २१ ख. °पसा व्यक्तं कृष्णः स° । २२ ग. °नो व्यक्तस्त° । २३ क. न च ।

## अथ चतुर्थोऽध्यायः ।

लोमहर्षण उवाच—

[1]अभिषिच्याधिराजेन्द्रं पृथुं वैण्यं पितामहः । ततः क्रमेण राज्यानि व्यादेष्टुमुपचक्रमे ॥ १
द्विजानां वीरुधां चैव नक्षत्रग्रहयोस्तथा । यज्ञानां तपसां चैव सोमं राज्येऽभ्यषेचयत् ॥ २
[3]अपां तु वरुणं राज्ये राज्ञां वैश्रवणं पतिम् । आदित्यानां तथा विष्णुं वसूनामथ पावकम् ॥ ३
प्रजापतीनां दक्षं तु मरुतामथ वासवम् । दैत्यानां दानवानां वै प्रह्लादममितौजसम् ॥ ४
वैवस्वतं पितॄणां च यमं राज्येऽभ्यषेचयत् । यक्षाणां राक्षसानां च पार्थिवानां तथैव च ॥ ५
सर्वभूतपिशाचानां गिरीशं शूलपाणिनम् । शैलानां हिमवन्तं च नदीनामथ सागरम् ॥ ६
गन्धर्वाणामधिपतिं चक्रे चित्ररथं प्रभुम् । नागानां वासुकिं चक्रे सर्पाणामथ तक्षकम् ॥ ७
वारणानां तु राजानमैरावतमथाऽऽदिशत् । उच्चैःश्रवसमश्वानां गरुडं चैव पक्षिणाम् ॥ ८
मृगाणामथ शार्दूलं गोवृषं तु गवां पतिम् । वनस्पतीनां राजानं प्लक्षमेवाभ्यषेचयत् ॥ ९
एवं विभज्य राज्यानि क्रमेणैव पितामहः । दिशां पालानथ ततः स्थापयामास स प्रभुः ॥ १०
पूर्वस्यां दिशि पुत्रं तु वैराजस्य प्रजापतेः । दिशः पालं सुधन्वानं राजानं सोऽभ्यषेचयत् ॥ ११
दक्षिणस्यां[6] दिशि तथा कर्दमस्य प्रजापतेः । पुत्रं शङ्खपदं नाम राजानं सोऽभ्यषेचयत् ॥ १२
पश्चिमस्यां दिशि तथा रजसः पुत्रमच्युतम् । केतुमन्तं महात्मानं राजानं सोऽभ्यषेचयत् ॥ १३
तथा हिरण्यरोमाणं पर्जन्यस्य प्रजापतेः । उदीच्यां दिशि दुर्धर्षं राजानं सोऽभ्यषेचयत् ॥ १४
तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना । यथाप्रदेशमद्यापि धर्मेण प्रतिपाल्यते ॥ १५
राजसूयाभिषिक्तस्तु पृथुरेतैर्नराधिपैः । वेददृष्टेन विधिना राजा[10] राज्ये नराधिपः ॥ १६
ततो मन्वन्तरेऽतीते चाक्षुषेऽमिततेजसि । वैवस्वताय मनवे पृथिव्यां राज्यमादिशत् ॥ १७
तस्य विस्तरमाख्यास्ये मनोर्वैवस्वतस्य ह । भवतां[11] चाऽऽनुकूल्याय यदि श्रोतुमिहेच्छथ ॥
महदेतदधिष्ठानं पुराणे तदधिष्ठितम् ॥ १८

मुनय ऊचुः—

विस्तरेण पृथोर्जन्म लोमहर्षण कीर्तय । यथा महात्मना तेन दुग्धा[12] वेयं वसुंधरा ॥ १९
यथा[13] वाऽपि नृभिर्दुग्धा यथा देवैर्[14]महर्षिभिः । यथा दैत्यैश्च नागैश्च यथा यक्षैर्यथा द्रुमैः ॥ २०
यथा शैलैः पिशाचैश्च गन्धर्वैश्च द्विजोत्तमैः । राक्षसैश्च महासत्त्वैर्यथा दुग्धा वसुंधरा ॥ २१
तेषां पात्रविशेषांश्च वक्तुमर्हसि सुव्रत । वत्स[15]क्षीरविशेषांश्च दोग्धारं चानुपूर्वशः ॥ २२
यस्माच्च कारणात्पाणिर्वेणस्य मथितः पुरा । क्रुद्धैर्महर्षिभिस्तात कारणं तच्च कीर्तय ॥ २३

[17]लोमहर्षण उवाच—

शृणुध्वं कीर्तयिष्यामि पृथोर्वैण्यस्य विस्तरम् । एकाग्राः प्रयता[18]श्चैव पुण्यार्थं वै द्विजर्षभाः[19] ॥ २४

---

१ क. भध्यापयच्च रा° । २ ग. °च्याऽऽदिरा° । ३ ग. आपे । ४ क. प्रभुम् । ५ क. ग. °मेण प्रपि° । ६ क. ख. °स्यां महात्मानं क° । ७ क. शङ्खप्रदं । ८ ख. °सूयेऽभि° । ९ क. ख. राजरा° । १० ग. °थिवीरा° । ११ क. °वतामानु° । १२ ख. भूता । १३ ख. °था च पितृभि° । १४ क. ख. °वैर्यथर्षि° । १५ ख. वत्सान्क्षीर° । १६ क. तत्प्रकी° । १७ क. सूत । १८ ख. प्रणता° । १९ क. ख. द्विजोत्तमाः ।

नाशुचेः क्षुद्रमनसो नाशिष्यस्याव्रतस्य च । कीर्तयेयमिदं विप्राः कृतघ्नायाहिताय च ॥ २५
स्वर्ग्यं यशस्यमायुष्यं धन्यं वेदैश्च संमितम् । रहस्यमृषिभिः प्रोक्तं शृणुध्वं वै यथातथम् ॥ २६
यश्चेमं कीर्तयेन्नित्यं पृथोर्वैण्यस्य विस्तरम् । ब्राह्मणेभ्यो नमस्कृत्य न स शोचेत्कृताकृतम् ॥ २७
आसीद्धर्मस्य संगोप्ता पूर्वमत्रिसमः प्रभुः । अत्रिवंशे समुत्पन्नस्त्वङ्गो नाम प्रजापतिः ॥ २८
तस्य पुत्रोऽभवद्वेणो नात्यर्थं धर्मकोविदः । जातो मृत्युसुतायां वै सुनीथायां प्रजापतिः ॥ २९
स मातामहदोषेण तेन कालात्मजात्मजः । स्वधर्मं पृष्ठतः कृत्वा कामलोभेष्ववर्तत ॥ ३०
मर्यादां भेदयामास धर्मोपेतां स पार्थिवः । वेदधर्मानतिक्रम्य सोऽधर्मनिरतोऽभवत् ॥ ३१
निःस्वाध्यायवषट्काराः प्रजास्तस्मिन्प्रजापतौ । प्रवृत्तं न पपुः सोमं हुतं यज्ञेषु देवताः ॥ ३२
न यष्टव्यं न होतव्यमिति तस्य प्रजापतेः । आसीत्प्रतिज्ञा क्रूरेयं विनाशे प्रत्युपस्थिते ॥ ३३
अहमिज्यश्च यष्टा च यज्ञश्चेति भृगूद्वह । मयि यज्ञो विधातव्यो मयि होतव्यमित्यपि ॥ ३४
तमतिक्रान्तमर्यादमाददानमसांप्रतम् । ऊचुर्महर्षयः सर्वे मरीचिप्रमुखास्तदा ॥ ३५
वयं दीक्षां प्रवेक्ष्यामः संवत्सरगणान्बहून् । अधर्मं कुरु मा वेण एष धर्मः सनातनः ॥ ३६
निधनेऽत्रेः प्रसूतस्त्वं प्रजापतिरसंशयम् । प्रजाश्च पालयिष्येऽहमितीह समयः कृतः ॥ ३७
तांस्तथा ब्रुवतः सर्वान्महर्षीनब्रवीत्तदा । वेणः प्रहस्य दुर्बुद्धिरिममर्थमनर्थवित् ॥ ३८

वेण उवाच—

स्रष्टा धर्मस्य कश्चान्यः श्रोतव्यं कस्य वा मया । श्रुतवीर्यतपःसत्यैर्मया वा कः समो भुवि ३९
प्रभवं सर्वभूतानां धर्माणां च विशेषतः । संमूढा न विदुर्नूनं भवन्तो मां विचेतसः ॥ ४०
इच्छन्दहेयं पृथिवीं प्लावयेयं जलैस्तथा । द्यां वै भुवं च रुन्धेयं नात्र कार्या विचारणा ॥ ४१
यदा न शक्यते मोहादवलेपाच्च पार्थिवः । अपनेतुं तदा वेणस्ततः क्रुद्धा महर्षयः ॥ ४२
तं निगृह्य महात्मानो विस्फुरन्तं महाबलम् । ततोऽस्य सव्यमूरुं ते ममन्थुर्जातमन्यवः ॥ ४३
तस्मिन्निमथ्यमाने वै राज्ञ ऊरौ तु जज्ञिवान् । ह्रस्वोऽतिमात्रः पुरुषः कृष्णश्चेति बभूव ह ॥ ४४
स भीतः प्राञ्जलिर्भूत्वा तस्थिवान्द्विजसत्तमाः । तमत्रिर्विह्वलं दृष्ट्वा निषीदेत्यब्रवीत्तदा ॥ ४५
निषादवंशकर्ताऽसौ बभूव वदतां वराः । धीवरानसृजच्चापि वेणकल्मषसंभवान् ॥ ४६
ये चान्ये विन्ध्यनिलयास्तथा पर्वतसंश्रयाः । अधर्मरुचयो विप्रास्ते तु वै वेणकल्मषाः ॥ ४७
ततः पुनर्महात्मानः पाणिं वेणस्य दक्षिणम् । अरणीमिव संरब्धा ममन्थुर्जातमन्यवः ॥ ४८
पृथुस्तस्मात्समुत्पन्नः कराज्ज्वलनसंनिभः । दीप्यमानः स्ववपुषा साक्षादग्निरिव ज्वलन् ॥ ४९
अथ सोऽजगवं नाम धनुर्गृह्य* महारवम् । शरांश्च दिव्यान्रक्षार्थं कवचं च महाप्रभम् ॥ ५०
तस्मिञ्जातेऽथ भूतानि संप्रहृष्टानि सर्वशः । समापेतुर्महाभागा वेणस्तु त्रिदिवं ययौ ॥ ५१

---

* ल्यबार्षः ।

---

१ ख. त्रा । २ ख. °र्ग्यं परममा° । ३ ख. °मं प्रथये° । ४ ग. स पिता° । ५ ख. ग. कामाल्लोभे° । ६ क. ग. °दां स्थापया° । ७ क. ग. धर्मापे° । ८ ग. ऋतूद्वह । ९ ग. यज्ञा । १० ग. विधातव्या । ११ ग. नैष । १२ क °मिति ह स°, ग. °मिति ते स° । १३ क. ख. कर्ता । १४ ख. °न्तो मामचे° । १५ क. °तोऽपस° । १६ क. ख. तस्मिंस्तु म° । १७ ख. वरः । १८ ख. °यास्तुषारास्तम्बुरास्तथा । अ° । ग. °यास्तुषारास्तुम्बुरास्तथा । अ° । १९ क. ख. संबद्धा । २० क. °रिवापरः । अ° । २१ क. ग. °न् । आयमाज° । २२ ग. °प्रकृष्टा° ।

ुत्पन्नेन भो विप्राः सत्पुत्रेण महात्मना । त्रातः स पुरुषव्याघ्रः पुंनाम्नो नरकात्तदा ॥ ५२
समुद्राश्च नद्यश्च रत्नान्यादाय सर्वशः । तोयानि चाभिषेकार्थं सर्व एवोपतस्थिरे ॥ ५३
तामहश्च भगवान्देवैराङ्गिरसैः सह । स्थावराणि च भूतानि जङ्गमानि च सर्वशः ॥ ५४
ागम्य तदा वैण्यमभ्यषिञ्चन्नराधिपम् । महता राजराजेन प्रजास्तेनानुरञ्जिताः ॥ ५५
ाऽभिषिक्तो महातेजा विधिवद्धर्मकोविदैः । आधिराज्ये तदा राज्ञां पृथुर्वैण्यः प्रतापवान् ५६
त्राऽपरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः । अनुरागात्ततस्तस्य नाम राजाऽभ्यजायत ॥ ५७
ापस्तस्तम्भिरे तस्य समुद्रमभियास्यतः । पर्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत् ॥ ५८
कृष्टपच्या पृथिवी सिध्यन्त्यन्नानि चिन्तनात्[3] । सर्वकामदुघा गावः पुटके पुटके मधु ॥ ५९
तस्मिन्नेव काले तु यज्ञे पैतामहे शुभे । सूतः सूत्यां समुत्पन्नः सौत्येऽहनि महामतिः ॥ ६०
स्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः । पृथोः स्तवार्थं तौ तत्र समाहूतौ महर्षिभिः ॥ ६१
ावूचुर्ऋषयः सर्वे स्तूयतामेष पार्थिवः । कर्मैतदनुरूपं वां पात्रं चायं नराधिपः ॥ ६२
ावूचतुस्तदा सर्वांस्तानृषीन्सूतमागधौ । आवां देवानृषींश्चैव प्रीणयावः स्वकर्मभिः ॥ ६३
चास्य विद्मो वै कर्म[4] नाम वा लक्षणं[5] यशः । स्तोत्रं येनास्य कुर्याव राज्ञस्तेजस्विनो द्विजाः
ऋषिभिस्तौ नियुक्तौ तु भविष्यैः स्तूयतामिति । यानि कर्माणि कृतवान्पृथुः पश्चान्महाबलः ६५
तः प्रभृति[6] वै लोके स्तवेषु मुनिसत्तमाः । आशीर्वादाः प्रयुज्यन्ते सूतमागधबन्दिभिः ॥ ६६
योः स्तवान्ते सुप्रीतः पृथुः प्रादात्प्रजेश्वरः । अनूपदेशं सूताय मगधं मागधाय च ॥ ६७
दृष्ट्वा परमप्रीताः प्रजाः प्रोचुर्मनीषिणः । वृत्तीनामेष वो दाता भविष्यति नराधिपः ॥ ६८
ततो वैण्यं महात्मानं प्रजाः समभिदुद्रुवुः । त्वं नो वृत्तिं विधत्स्वेति महर्षिवचनात्तदा ॥ ६९
सोऽभिद्रुतः प्रजाभिस्तु प्रजाहितचिकीर्षया । धनुर्गृह्य पृषत्कांश्च पृथिवीमाद्रवद्बली[11] ॥ ७०
ततो वैण्यभयत्रस्ता[12] गौर्भूत्वा प्राद्रवन्मही । तां पृथुर्धनुरादाय द्रवन्तीमन्वधावत ॥ ७१
सा लोकान्ब्रह्मलोकादीन्गत्वा वैण्यभयात्तदा[13] । प्रददर्शाग्रतो[14] वैण्यं प्रगृहीतशरासनम् ॥ ७२
ज्वलद्भिर्निशितैर्बाणैर्दीप्ततेजसमन्ततः । महायोगं महात्मानं दुर्धर्षममरैरपि ॥ ७३
*अलभन्ती तु सा त्राणं वैण्यमेवान्वपद्यत । कृताञ्जलिपुटा भूत्वा पूज्या लोकैस्त्रिभिस्तदा ७४
उवाच वैण्यं[16] नाधर्मं[17] स्त्रीवधे परिपश्यसि । कथं धारयिता चासि प्रजा राजन्विना मया ॥ ७५
मयि लोकाः स्थिता[18] राजन्मयेदं धार्यते जगत् । मद्विनाशे विनश्येयुः प्रजाः पार्थिव विद्धि तत् ॥
न मामर्हसि हन्तुं वै [19]श्रेयश्चेत्त्वं चिकीर्षसि । प्रजानां पृथिवीपाल शृणु चेदं वचो मम ॥ ७७
उपायतः समारब्धाः सर्वे सिध्यन्त्युपक्रमाः । उपायं पश्य येन त्वं धारयेथाः प्रजामिमाम् ७८
हत्वाऽपि[21] मां न शक्तस्त्वं प्रजानां पोषणे नृप । अनुकूला भविष्यामि यच्छ कोपं महामते[22] ७९

* अनुदात्तेत्त्वप्रयुक्तात्मनेपदस्यानित्यत्वादभावः ।

१ क. °भ्य ददुर्वैण्य° । २ क. °प्रान्ययत्नतः । स° । ३ ग. चिन्तया । ४ ख. °र्म न तथा ल° । ५ क. नास्य ल° । ६ क. °क्षणमञ्जसा । स्तो° । ७.क. ख. कुर्वो वै रा° । ८ घ. ख. °ति त्रैलो° । ९ क. ख. °जाः प्राहुर्म° । १० ग. वृत्तिं तामे° । ११ ख. °मार्दयद्व° । १२ क. वैण्यादपत्र° । १३ क. °दा । द° । १४ क. °र्शाग्रे ततो वै° । १५ क. ख. °मच्युतम् । म° । १६ क. चैनं । १७ ग. °ण्यं माऽध° । १८ ख. स्थिरा । १९ क. श्रेयो यत्त्वं । २० क. °यसहिता रम्याः सर्वे । २१ क. °पि मामश° । २२ ख. महीपते । ग. महाद्युते ।

अवध्यां च स्त्रियं प्राहुस्तिर्यग्योनिगतेष्वपि[1] । यैद्येवं पृथिवीपाले न धर्मं त्यक्तुमर्हसि ॥ ८१
एवं बहुविधं वाक्यं श्रुत्वा राजा महामनाः । कोपं निगृह्य धर्मात्मा वसुधामिदमब्रवीत्[5] ॥ ८२

पृथुरुवाच—

एकस्यार्थे[6] तु यो हन्यादात्मनो वा परस्य वा । बहून्वा प्राणिनो[7]ऽनन्तं भवेत्तस्येह पातकम् ॥८३
सुखमेधन्ति बहवो यस्मिंस्तु निहतेऽशुभे । तस्मिन्हते नास्ति भद्रे पातकं चोपपातकम् ॥ ८४
सोऽहं प्रजानिमित्तं त्वां हनिष्यामि वसुंधरे । यदि मे वचनान्नाद्य करिष्यसि जगद्धितम् ॥८५
त्वां निहत्याद्य बाणेन मच्छासनपराङ्मुखीम् । आत्मानं प्रथयित्वाऽहं प्रजा धारयिता स्वयम् ।
सा त्वं शासनमास्थाय मम धर्मभृतां वरे । संजीवय प्रजाः सर्वाः समर्था ह्यसि धारणे ॥ ८६
दुहितृत्वं च मे गच्छ तत एनमहं शरम् । नियच्छेयं त्वद्वधार्थमुद्यन्तं घोरदर्शनम् ॥ ८७

वसुधोवाच—

सर्वमेतदहं वीर विधास्यामि न संशयः । वत्सं[11] तु मम[12] संपश्य क्षरेयं येन वत्सला ॥ ८८
समां च कुरु सर्वत्र मां त्वं धर्मभृतां वर । यथा[13] विस्यन्दमानं मे क्षीरं सर्वत्र भावयेत् ॥ ८९

लोमहर्षण उवाच—

तत उत्सारयामास शैलाञ्शतसहस्रशः । धनुष्कोट्या तदा वैन्यस्तेन शै(से)ला विवर्धिताः (ता)
न हि पूर्वविसर्गे[14] वै विषमे पृथिवीतले । संविभागः पुराणां वा ग्रामाणां वाऽभवत्तदा ॥ ९१
न सस्यानि न गोरक्ष्यं[15] न कृषिर्न वणिक्पथः । *नैव सत्यानृतं चाऽऽसीन्न लोभो न च मत्सरः
वैवस्वतेऽन्तरे तस्मिन्सांप्रतं समुपस्थिते । वैण्यात्प्रभृति वै विप्राः सर्वस्यैतस्य संभवः ॥ ९३
यत्र यत्र समं त्वस्या भूमेरासीत्तदा द्विजाः । तत्र तत्र प्रजाः सर्वा निवासं समरोचयन् ॥ ९४
आहारः फलमूलानि प्रजानामभवत्तदा । कृच्छ्रेण[16] महता युक्त इत्येवमनुशुश्रुम[17] ॥ ९५
स कल्पयित्वा वत्सं तु मनुं स्वायंभुवं प्रभुम् । स्वपाणौ पुरुषव्याघ्रो दुदोह पृथिवीं[18] ततः ॥ ९६
सस्यजातानि सर्वाणि पृथुर्वैण्यः प्रतापवान् । तेनान्नेन प्रजाः सर्वा वर्तन्तेऽद्यापि सर्वशः[19] ॥ ९७
ऋषयश्च तदा देवाः पितरो[20]ऽथ सरीसृपाः । दैत्या यक्षाः पुण्यजना गन्धर्वाः पर्वता नगाः ॥९८
एते पुरा द्विजश्रेष्ठा दुदुहुर्धरणीं किल । क्षीरं वत्सश्च पात्रं च तेषां दोग्धा पृथक्पृथक् ॥ ९९
ऋषीणामभवत्सोमो वत्सो दोग्धा बृहस्पतिः । क्षीरं तेषां तपो ब्रह्म पात्रं छन्दांसि भो द्विजाः
देवानां काञ्चनं पात्रं वत्सस्तेषां शतक्रतुः । क्षीरमोजस्करं[21] चैव दोग्धा च भगवान्रविः[22] ॥ १०१
पितॄणां राजतं पात्रं यमो वत्सः प्रतापवान् । अन्तकश्चाभवद्दोग्धा क्षीरं तेषां सुधा[23] स्मृता १०२
नागानां तक्षको वत्सः पात्रं चालाबुसंज्ञकम् । दोग्धा त्वैरावतो नागस्तेषां क्षीरं विषं स्मृतम् ॥
असुराणां मधुर्दोग्धा क्षीरं मायामयं स्मृतम् । विरोचनस्तु वत्सोऽभूदायसं पात्रमेव च ॥ १०४

---

* एतदारभ्य समुपस्थित इत्यन्तं ग. पुस्तके नास्ति ।

---

१ क. °गता अपि । २ ख. °पि । संपश्यन्पृथि° । ३ क. संपश्य । ४ क. °ल अध° । ५ क. °त् । ए° । ६ ख. °स्यार्थाय यो । ग. °स्यार्थेन यो । ७ क. °नो भद्रे भ° । ८ क. ख. शुभे । ९ क. °मित्ते त्वां । १० ख. °चनं नाद्य । ११ ख. °त्सं त्वममृतं प° । १२ ग. °म तं प° । १३ क. यस्या । १४ म. °ले । प्रवि° । १५ ग. गौरक्षं । १६ ख. कृच्छ्र । १७ क. °म । संक° । १८ क. °थिवीतलम् । स° । १९ ख सर्वतः । २० क. °तरः सस° । ख. °तरोऽपि स° । २१ ख. °रमूर्जस्क° । २२ क. °वान्कविः । २३ ग. स्वधा ।

क्षाणामामपात्रं तु वत्सो वैश्रवणः प्रभुः । दोग्धा रजतनाभस्तु क्षीरान्तर्धानमेव च(?) ॥१०५
माली राक्षसेन्द्राणां वत्सः क्षीरं च शोणितम् । दोग्धा रजतनाभस्तु कपालं पात्रमेव च १०६
न्धर्वाणां चित्ररथो वत्सः पात्रं च पङ्कजम् । दोग्धा च सुरुचिः क्षीरं तेषां गन्धः शुचिः स्मृतः
लं पात्रं पर्वतानां क्षीरं रत्नौषधीस्तथा । वत्सस्तु हिमवानासीद्दोग्धा मेरुर्महागिरिः ॥ १०८
क्षो वत्सस्तु वृक्षाणां दोग्धा शालस्तु पुष्पितः । पालाशपात्रं क्षीरं च च्छिन्नदग्धप्ररोहणम् ॥
यं धात्री विधात्री च पावनी च वसुंधरा । चराचरस्य सर्वस्य प्रतिष्ठा योनिरेव च ॥ ११०
र्वकामदुघा दोग्ध्री सर्वसस्यप्ररोहणी । आसीदियं समुद्रान्ता मेदिनी परिविश्रुता ॥ १११
धुकैटभयोः कृत्स्ना मेदसा समभिप्लुता । तेनेयं मेदिनी देवी उच्यते ब्रह्मवादिभिः ॥ ११२
तोऽभ्युपगमाद्राज्ञः पृथोर्वैण्यस्य भो द्विजाः । दुहितृत्वमनुप्राप्ता देवी पृथ्वीति चोच्यते॥११३
धुना प्रविभक्ता च शोधिता च वसुंधरा । सस्याकरवती स्फीता पुरैपत्तनशालिनी ॥ ११४
वं प्रभावो वैण्यः स राजाऽऽसीद्राजसत्तमः । नमस्यश्चैव पूज्यश्च भूतग्रामैर्न संशयः ॥ ११५
ाह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः । पृथुरेव नमस्कार्यो ब्रह्मयोनिः सनातनः ॥ ११६
ार्थिवैश्च महाभागैः पार्थिवत्वमिहेच्छुभिः । आदिराजो नमस्कार्यः पृथुर्वैण्यः प्रतापवान्॥११७
ोधैरपि च विक्रान्तैः प्राप्तुकामैर्जयं युधि । आदिराजो नमस्कार्यो योधानां प्रथमो नृपः ११८
ो हि योद्धा रणं याति कीर्तयित्वा पृथुं नृपम् । स घोररूपात्सङ्ग्रामात्क्षेमी भवति कीर्तिमान्॥
ैश्यैरपि च वित्ताढ्यैर्वैश्यवृत्तिविधायिभिः । पृथुरेव नमस्कार्यो वृत्तिदाता महायशाः ॥ १२०
थैव शूद्रैः शुचिभिस्त्रिवर्णपरिचारिभिः । पृथुरेव नमस्कार्यः श्रेयः परमिहेप्सुभिः ॥ १२१
ते वत्सविशेषाश्च दोग्धारः क्षीरमेव च । पात्राणि च मयोक्तानि किं भूयो वर्णयामि वः १२२

इति श्रीमहापुराणे ब्राह्मे पृथोर्जन्ममाहात्म्यकथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५९

---

अथ पञ्चमोऽध्यायः ।

---

ऋषय ऊचुः—

मन्वन्तराणि सर्वाणि विस्तरेण महामते । तेषां पूर्वविसृष्टिं च लोमहर्षण कीर्तय ॥ १
यावन्तो मनवश्चैव यावन्तं कालमेव च । मन्वन्तराणि भोः सूत श्रोतुमिच्छाम तत्त्वतः ॥ २

लोमहर्षण उवाच—

न शक्यो विस्तरो विप्रा वक्तुं वर्षशतैरपि । मन्वन्तराणां सर्वेषां संक्षेपाच्छृणुत द्विजाः ॥ ३
स्वायंभुवो मनुः पूर्वं मनुः स्वारोचिषस्तथा । उत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥ ४
वैवस्वतश्च भो विप्राः सांप्रतं मनुरुच्यते । सावर्णिश्च मनुस्तद्वद्रैभ्यो रौच्यस्तथैव च ॥ ५
तथैव मेरुसावर्ण्यश्चत्वारो मनवः स्मृताः । अतीता वर्तमानाश्च तथैवानागता द्विजाः ॥ ६

---

१ ग. सुमना । २ क. विश्वस्य । ३ क. °सा च परिप्लु° । ४ क. °रम्रामवती च सा । ए° । ५ ग. °श्च नमस्कार्यो म° । ६ ग. °गैः फलेप्सुभिः । ७ ख. °क्रान्तैराप्तु° । ८ ख. °र्यो वृत्तिदाता महायशाः । यो । ९ ख. °मात्तराति बहुश्री° । १० ख. °त्तार्थे वैश्य° । ११ ग. शूरैः । १२ ग. °था । औत्त° । १३ ख. °द्वद्राव्यो रौ° ।

कीर्तिता मनवस्तुभ्यं मयैवैते यथा श्रुताः । ऋषींस्त्वेषां प्रवक्ष्यामि पुत्रान्देवगणांस्तथा ॥ ७
मरीचिरत्रिर्भगवानङ्गिराः पुलहः क्रतुः । पुलस्त्यश्च वसिष्ठश्च सप्तैते ब्रह्मणः सुताः ॥ ८
उत्तरस्यां दिशि तथा द्विजाः सप्तर्षयस्तथा । आग्नीध्रश्चाग्निबाहुश्च मेध्यो मेधातिथिर्वसुः ॥ ९
ज्योतिष्मान्द्युतिमान्हव्यः सवलः पुत्रसंज्ञकः । मनोः स्वायंभुवस्यैते दश पुत्रा महौजसः ॥ १०
एतद्वै प्रथमं विप्रा मन्वन्तरमुदाहृतम् । और्वो वसिष्ठपुत्रश्च स्तम्बः कश्यप एव च ॥ ११
प्राणो बृहस्पतिश्चैव दत्तोऽत्रिश्च्यवनस्तथा । एते महर्षयो विप्रा वायुप्रोक्ता महाव्रताः ॥ १२
देवाश्च तुषिता नाम स्मृताः स्वारोचिषेऽन्तरे । हविघ्नः सुकृतिर्ज्योतिरापो मूर्तिरपि स्मृतः ॥ १३
प्रतीतश्च नभस्यश्च नभ ऊर्जस्तथैव च । स्वारोचिषस्य पुत्रास्ते मनोर्विप्रा महात्मनः ॥ १४
कीर्तिताः पृथिवीपाला महावीर्यपराक्रमाः । द्वितीयमेतत्कथितं विप्रा मन्वन्तरं मया ॥ १५
इदं तृतीयं वक्ष्यामि तद्बुध्यध्वं द्विजोत्तमाः । वसिष्ठपुत्राः सप्ताऽऽसन्वासिष्ठा इति विश्रुताः १६
हिरण्यगर्भस्य सुता ऊर्जा जाताः सुतेजसः । ऋषयोऽत्र मया प्रोक्ताः कीर्त्यमानान्निबोधत ॥ १७
औत्तमेयान्मुनिश्रेष्ठा दश पुत्रान्मनोरिमान् । इष ऊर्जस्तनूर्जस्तु मधुर्माधव एव च ॥ १८
शुचिः शुक्रः सहश्चैव नभस्यो नभ एव च । भानवस्तत्र देवाश्च मन्वन्तरमुदाहृतम् ॥ १९
मन्वन्तरं चतुर्थं वः कथयिष्यामि सांप्रतम् । काव्यः पृथुस्तथैवाग्निर्जह्नुर्धाता द्विजोत्तमाः ॥ २०
कपीवानकपीवांश्च तत्र सप्तर्षयो द्विजाः । पुराणे कीर्तिता विप्राः पुत्राः पौत्राश्च भो द्विजाः २१
तथा देवगणाश्चैव तामसस्यान्तरे मनोः । द्युतिस्तपस्यः सुतपास्तपोभूतः सनातनः ॥ २२
तपोरतिरकल्माषस्तन्वी धन्वी परंतपः । तामसस्य मनोरेते दश पुत्राः प्रकीर्तिताः ॥ २३
वायुप्रोक्ता मुनिश्रेष्ठाश्चतुर्थं चैतदन्तरम् । देवबाहुर्यदुध्रश्च मुनिर्वेदशिरास्तथा ॥ २४
हिरण्यरोमा पर्जन्य ऊर्ध्वबाहुश्च सोमजः । सत्यनेत्रस्तथाऽऽत्रेय एते सप्तर्षयोऽपरे ॥ २५
देवांश्चाभूतरजसस्तथा प्रकृतयः स्मृताः । वारिप्लवश्च रैभ्यश्च मनोरन्तरमुच्यते ॥ २६
अथ पुत्रानिमांस्तस्य बुध्यध्वं गदतो मम । धृतिमानव्ययो युक्तस्तत्त्वदर्शी निरुत्सुकः ॥ २७
आरण्यश्च प्रकाशश्च निर्मोहः सत्यवाकृती । रैवतस्य मनोः पुत्राः पञ्चमं चैतदन्तरम् ॥ २८
षष्ठं तु संप्रवक्ष्यामि तद्बुध्यध्वं द्विजोत्तमाः । भृगुर्नभो विवस्वांश्च सुधामा विरजास्तथा ॥ २९
अतिनामा सहिष्णुश्च सप्तैते च महर्षयः । चाक्षुषस्यान्तरे विप्रा मनोर्देवास्त्विमे स्मृताः ॥ ३०
आबालप्रथितास्ते वै पृथक्त्वेन दिवौकसः । लेखाश्च नामतो विप्राः पञ्च देवगणाः स्मृताः ३१
ऋषेरङ्गिरसः पुत्रा महात्मानो महौजसः । नाड्वलेया मुनिश्रेष्ठा दश पुत्रास्तु विश्रुताः ॥ ३२
रुरुप्रभृतयो विप्राश्चाक्षुषस्यान्तरे मनोः । षष्ठं मन्वन्तरं प्रोक्तं सप्तमं तु निबोधत ॥ ३३
अत्रिर्वसिष्ठो भगवान्कश्यपश्च महानृषिः । गौतमोऽथ भरद्वाजो विश्वामित्रस्तथैव च ॥ ३४

---

१ ख. ग. मेधा । २ क. °थिर्विभुः । ज्यो° । ३ ख. °न्हव्यो मनुपुत्रस्तथैव च । म° । ४ ग. काश्यप । ५ क. जितेन्द्रियाः । ख. महाबलाः । ६ क. हविष्यः । ग. हविध्र° । ७ ख. °भस्तर्पस्त° । ८ ख. नाम । ९ क. तु । ख. च । १० क. कक्षीवान्कपिवांश्चैव त° । ११ ख. सत्या । १२ क. °नोः । धृतिस्तपःसुतरणस्तपोमूलं स° । १३ ख. °पोमूलः स° । १४ क. °स्तन्विध° । १५ क. °धन्विप° । १६ क. °तपाः । ता° । १७ ख. °क्ताश्च भो विप्राश्च° । १८ क. सोमपः । १९ क. °वाश्च भू° । २० ख. °ताः । पारि° । २१ ग. वैद्यश्च । २२ ख. ग. अरण्यश्च । २३ क. निर्भेदः । २४ क. °तिधामा । २५ ग. °सैतेऽतिम° । २६ ख. चैते । २७ क. °ताः । अप्रसूताश्च ऋषयः पृथुशाज्या दिवौकसः । २८ ख. नाड्वले° । २९ क. °ताः । गुरु° ।

तथैव पुत्रो भगवानृचीकस्य महात्मनः । सप्तमो जमदग्निश्च [1]ऋषयः सांप्रतं दिवि ॥ ३५
साध्या रुद्राश्च विश्वे च वसवो मरुतस्तथा । आदित्याश्चाश्विनौ चापि देवौ वैवस्वतौ स्मृतौ ३६
मनोर्वैवस्वतस्यैते वर्तन्ते सांप्रतेऽन्तरे । इक्ष्वाकुप्रमुखाश्चैव दश पुत्रा महात्मनः ॥ ३७
एतेषां कीर्तितानां तु महर्षीणां महौजसाम् । तेषां पुत्राश्च पौत्राश्च दिक्षु सर्वासु भो द्विजाः ३८
मन्वन्तरेषु सर्वेषु[2] प्रागासन्सप्त सप्तकाः । लोके धर्मव्यवस्थार्थं लोकसंरक्षणाय च ॥ ३९
मन्वन्तरे व्यतिक्रान्ते चत्वारः सप्तका गणाः । कृत्वा कर्म दिवं यान्ति ब्रह्मलोकमनामयम् ॥ ४०
ततोऽन्ये तपसा युक्ताः स्थानं तत्पूरयन्त्युत । अतीता वर्तमानाश्चै[3] क्रमेणैतेन भो द्विजाः ॥ ४१
अनागताश्च सप्तैते स्मृता दिवि महर्षयः । मनोरन्तरमासाद्य सावर्ण[4]स्येह भो द्विजाः ॥ ४२
रामो व्यासस्तथाऽऽत्रेयो दीप्तिमन्तो बहुश्रुताः[5] । भारद्वाजस्तथा द्रौणिरश्वत्थामा महाद्युतिः ४३
गौतम[6]श्चाजरश्चैवं[7] शरद्वान्नाम गौतमः । कौशिको गालवश्चैव [8]औवेः काश्यप एव च ॥ ४४
एते सप्त महात्मानो भविष्या मुनिसत्तमाः । वैरी चैवाध्वरीवांश्च [9]शमनो धृतिमान्वसुः ॥ ४५
अरिष्टश्चाप्यधृष्टश्च वाजी सुमतिरेव च । सावर्णस्य मनोः पुत्रा भविष्या मुनिसत्तमाः ॥ ४६
एतेषां कल्यमुत्थाय कीर्तनात्सुखमेधते । यशश्चाऽऽप्नोति सुमहदायुष्मांश्च भवे[10]न्नरः ॥ ४७
एतान्युक्तानि भो विप्राः सप्तसप्त च तत्त्वतः । मन्वन्तराणि संक्षेपाच्छृणुतानागतान्यपि ॥ ४८
सावर्णा मनवो[11] विप्राः पञ्च तांश्च निबोधत[12] । एको[13] वैवस्वतस्तेषां चत्वारस्तु प्रजापतेः ॥ ४९
परमेष्ठिसुता विप्रा[14] मेरुसावर्ण्यतां गताः । दक्षस्यैते हि दौहित्राः प्रियायास्तनया नृपाः[15] ॥ ५०
महता तपसा युक्ता मेरुपृष्ठे महौजसः । रुचेः प्रजापतेः पुत्रो रौच्यो नाम मनुः स्मृतः ॥ ५१
भूत्यां चोत्पादितो देव्यां भौत्यो नाम[16] रुचेः सुतः। अनागताश्च सप्तैते कल्पेऽस्मिन्मनवः स्मृताः
तैरियं पृथिवी सर्वा सप्तद्वीपा[17] सपत्तना । [18]पूर्णं युगसहस्रं तु परिपाल्या द्विजोत्तमाः ॥ ५३
प्रजापाति(ते)श्च तपसा संहारं ते(रस्ते)षु नित्यशः । युगानि सप्ततिस्तानि साग्राणि कथितानि च
कृतत्रेतादियुक्तानि मनोरन्तरमुच्यते । चतुर्दशैते मनवः कथिताः कीर्तिवर्धनाः ॥ ५५
वेदेषु सपुराणेषु सर्वेषु प्रभविष्णवः । प्रजानां पतयो विप्रा धन्यमेषां प्रकीर्तनम् ॥ ५६
मन्वन्तरेषु संहाराः संहारान्तेषु संभवाः । न शक्यन्ते[19]ऽन्तस्तेषां वै वक्तुं वर्षशतैरपि ॥ ५७
विसर्गस्य प्रजानां वै संहारस्य च भो द्विजाः । मन्वन्तरेषु संहाराः श्रूयन्ते [20]द्विजसत्तमाः ॥ ५८
सशेषास्तत्र तिष्ठन्ति देवाः सप्तर्षिभिः सह । तपसा ब्रह्मचर्येण श्रुतेन च समन्विताः ॥ ५९
[21]पूर्णे युगसहस्रे तु कल्पो निःशेष उच्यते । तत्र भूतानि सर्वाणि दग्धान्यादित्यरश्मिभिः ॥ ६०
ब्रह्माणमग्रतः कृत्वा सहाऽऽदित्यगणैर्द्विजाः । प्रविशन्ति सुरश्रेष्ठं हरिनारायणं प्रभुम् ॥ ६१
स्रष्टारं सर्वभूतानां कल्पान्तेषु पुनः पुनः । अव्यक्तः शाश्वतो देवस्तस्य सर्वमिदं जगत् ॥ ६२
अत्र [22]वेः कीर्तयिष्यामि मनोर्वैवस्वतस्य वै । विसर्गं मुनिशार्दूलाः सांप्रतस्य महाद्युतेः ॥ ६३

---

१ क. ऋषिर्यस्माच्च जज्ञिरे । सा° । २ ख. °षु प्रथिताः सप्त । ३ क. °श्च ऋषयोऽपि च भो । ४ क. °र्णस्य ऽऽदितो द्वि° । ख. °र्णस्योदिता द्वि° । ५ क. °ताः । भर° । ६ क. ग. °मस्याऽऽत्मजश्चै° । ७ क. °व भरद्वाजोऽथ गौ° । ८ ख. धौम्यः । ९ क. सुमन्तो । १० ख. °वेत्सदा । ए° । ११ क. °नवस्तात्रपञ्च । ख. °नवस्तात प° । १२ क. ख. °ध मे । ए° । १३ क. °को विव° । १४ क. °प्रा मनुसा° । १५ ग. द्विजाः । १६ क. °म मनुः स्मृतः । अ° । १७ ग. ससमुद्रा । १८ ग. पूर्णवर्षस° । १९ क. ग. °क्यमन्तरं तेषां व° । २० ख. भरतर्षभ । २१ ग. °र्णे वर्षस° । २२ क. ते ।

अत्र वंशप्रसङ्गेन कथ्यमानं पुरातनम् । यत्रोत्पन्नो महात्मा स हरिर्वृष्णिकुले प्रभुः ॥ ६४

इति श्रीमहापुराणे ब्राह्मे मन्वन्तरकीर्तनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

श्लोकानामादितः समष्ट्यङ्काः—४२३

---

अथ षष्ठोऽध्यायः ।

---

लोमहर्षण उवाच—

विवस्वान्कश्यपाज्जज्ञे दाक्षायण्यां द्विजोत्तमाः । तस्य भार्याऽभवत्संज्ञा त्वाष्ट्री देवी विवस्वतः १
सुरेश्वरीति विख्याता त्रिषु लोकेषु भाविनी । सा वै भार्या भगवतो मार्तण्डस्य महात्मनः ॥ २
भर्तृरूपेण नातुष्यद्रूपयौवनशालिनी । संज्ञा नाम सुतपसा सुदीप्तेन समन्विता ॥ ३
आदित्यस्य हि तद्रूपं मण्डलस्य सुतेजसा । गात्रेषु परिदग्धं वै नातिकान्तमिवाभवत् ॥ ४
न खल्वयं मृतो(ता)ण्डस्य इति स्नेहादभाषत । अजानन्काश्यपस्तस्मान्मार्तण्ड इति चोच्यते ॥ ५
तेजस्त्वभ्यधिकं तस्य नित्यमेव विवस्वतः । येनातितापयामास त्रीँल्लोकान्कश्यपात्मजः ॥ ६
त्रीण्यपत्यानि भो विप्राः संज्ञायां तपतां वरः । आदित्यो जनयामास कन्यां द्वौ च प्रजापती ७
मनुर्वैवस्वतः पूर्वं श्राद्धदेवः प्रजापतिः । यमश्च यमुना चैव यमजौ संबभूवतुः ॥ ८
श्यामवर्णं तु तद्रूपं संज्ञा दृष्ट्वा विवस्वतः । असहन्ती तु स्वां छायां सवर्णां निर्ममे ततः ॥ ९
मायामयी तु सा संज्ञा तस्यां छायासमुत्थिताम् । प्राञ्जलिः प्रणता भूत्वा छाया संज्ञां द्विजोत्तमाः
उवाच किं मया कार्यं कथयस्व शुचिस्मिते । स्थिताऽस्मि तव निर्देशे शाधि मां वरवर्णिनि ११

संज्ञोवाच—

अहं यास्यामि भद्रं ते स्वमेव भवनं पितुः । त्वयैव भवने मह्यं वस्तव्यं निर्विशङ्कया ॥ १२
इमौ च बालकौ मह्यं कन्या चेयं सुमध्यमा । संभाव्यास्ते न चाऽऽख्येयमिदं भगवते किंचित् १३

सवर्णोवाच—

आ कचग्रहणाद्देवि आ शापान्नैव कर्हिचित् । आख्यास्यामि नमस्तुभ्यं गच्छ देवि यथासुखम् ॥

लोमहर्षण उवाच—

समादिश्य सवर्णां तु तथेत्युक्ता तया च सा । त्वष्टुः समीपमगमद्व्रीडितेव तपस्विनी ॥ १५
पितुः समीपगा सा तु पित्रा निर्भर्त्सिता शुभा । भर्तुः समीपं गच्छेति नियुक्ता च पुनः पुनः ॥
आगच्छद्वडवा भूत्वाऽऽच्छाद्य रूपमनिन्दिता । कुरूनथोत्तरान्गत्वा तृणान्यथ चचार ह ॥ १७
द्वितीयायां तु संज्ञायां संज्ञेयमिति चिन्तयन् । आदित्यो जनयामास पुत्रमात्मसमं तदा ॥ १८
पूर्वजस्य मनोर्विप्राः सदृशोऽयमिति प्रभुः । मनुरेवाभवन्नाम्ना सावर्ण इति चोच्यते ॥ १९
द्वितीयो यः सुतस्तस्याः स विज्ञेयः शनैश्वरः । संज्ञा तु पार्थिवी विप्राः स्वस्य पुत्रस्य वै तदा

---

१ क. ख. °कुलोद्भवः । इ° । २ क. उरेणुरिति । ख. सुरेणुरिति । ३ क. भामिनी । ४ ख. °म स्वत° । ५ क. ख. सुतेजसः । ६ ख. °नि कौरव्य सं° । ७ क. °यां भगवांस्ततः । आ° । ८ ख. °ज्ञां ततो द्विजाः । उ° । ९ ख. त्वयेह भ° । १० ख. मरके । ११ क. ख. शुभे । १२ क. ग. °मि मतं तुभ्यं । १३ ख. तथैव सा । १४ क. पितुः । १५ क. °मव्रीतिव च त° । १६ क. ख. पुरा । १७ ग. रवेः । १८ क. ग. सावर्ण्य । १९ ख. °स्तस्यां स ।

चकाराभ्यधिकं स्नेहं न तथा पूर्वजेषु वै । मनुस्तस्याः क्षमत्तत्तु(स्या अक्षमत) यमस्तस्या न चक्षमे
स वै रोषाच्च बाल्याच्च भाविनोऽर्थस्य वाऽनघ । पदा संतर्जयामास संज्ञां वैवस्वतो यमः ॥२२
तं शशाप ततः क्रोधात्सावर्णजननी तदा । चरणः पततामेष तवेति भृशदुःखिता ॥ २३
यमस्तु तत्पितुः सर्वं प्राञ्जलिः प्रत्यवेदयत् । भृशं शापभयोद्विग्नः संज्ञावाक्यैर्विशङ्कितः ॥ २४
शापोऽयं विनिवर्तेत प्रोवाच पितरं द्विजाः । मात्रा स्नेहेन सर्वेषु वर्तितव्यं सुतेषु वै ॥ २५
सेयमस्मानपास्येह विवस्वन्संबुभूषति । तस्यां मयोद्यतः पादो न तु देहे निपातितः ॥ २६
बाल्याद्वा यदि वां लौल्यान्मोहात्तत्क्षन्तुमर्हसि । शप्तोऽहमस्मि लोकेश जनन्या तपतां वर ॥
तव प्रसादाच्चरणो न पतेन्मम गोपते ॥ २७

विवस्वानुवाच—

असंशयं पुत्र महद्भविष्यत्यत्र कारणम् । येन त्वामाविशत्क्रोधो धर्मज्ञं सत्यवादिनम् ॥ २८
न शक्यमेतन्मिथ्या तु कर्तुं मातृवचस्तव । कृमयो मांसमादाय यास्यन्त्यवनिमेव च ॥ २९
कृतमेवं वचस्तथ्यं मातुस्तव भविष्यति । शापस्य परिहारेण त्वं च त्रातो भविष्यसि ॥ ३०
आदित्यश्चाब्रवीत्संज्ञां किमर्थं तनयेषु वै । तुल्येष्वभ्यधिकः स्नेह एकस्मिन्क्रियते त्वया ॥ ३१
सा तत्परिहरन्ती तु नाऽऽचचक्षे विवस्वते । स चाऽऽत्मानं समाधाय योगात्तथ्यमपश्यत ॥३२
तां शप्तुकामो भगवान्नाशपन्मुनिसत्तमाः । *मूर्धजेषु निजग्राह (स तु तां मुनिसत्तमाः ) ॥ ३३
ततः सर्वं यथावृत्तमाचचक्षे विवस्वते । विवस्वानथ तच्छ्रुत्वा क्रुद्धस्त्वष्टारमभ्यगात् ॥ ३४
दृष्ट्वा तु तं यथान्यायमर्चयित्वा विभावसुम् । निर्दग्धुकामं रोषेण सान्त्वयामास वै तदा ॥ ३५

त्वष्टोवाच—

तवातितेजसाऽऽविष्टमिदं रूपं न शोभते । असहन्ती च संज्ञा सा वने चरति शाद्वले ॥ ३६
द्रष्टा हि तां भवानद्य स्वां भार्यां शुभचारिणीम् । श्लाघ्यां योगबलोपेतां योगमास्थाय गोपते ॥
अनुकूलं तु ते देव यदि स्यान्मम संमतम् । रूपं निर्वर्तयाम्यद्य तव कान्तमरिंदम ॥ ३८
ततोऽभ्युपगमात्त्वष्टा मार्तण्डस्य विवस्वतः । भ्रमिमारोप्य तत्तेजः शातयामास भो द्विजाः ॥३९
ततो निर्भासितं रूपं तेजसा संहतेन वै । कान्तात्कान्ततरं द्रष्टुमधिकं शुशुभे तदा ॥ ४०
ददर्श योगमास्थाय स्वां भार्यां वडवां ततः । अधृष्यां सर्वभूतानां तेजसा नियमेन च ॥ ४१
वडवावपुषा विप्राश्चरन्तीमकुतोभयाम् । सोऽश्वरूपेण भगवांस्तां मुखे समभावयत् ॥ ४२
मैथुनाय विचेष्टन्तीं परपुंसोऽवशङ्कया । सा तन्निरवमच्छुक्रं नासिकाभ्यां विवस्वतः ॥ ४३
देवौ तस्यामजायेतामश्विनौ भिषजां वरौ । नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति ॥ ४४

---

* एतदर्धं ख. ग. पुस्तकयोर्नास्ति ।

---

१ ख. संताडयामास । २ ख. सा । ३ क. ग. °वर्ण्यज° । ४ ख. स्वपितुः । ५ ग. °र्तेति प्रो° । ६ क. ख. तदा । ७ ख. °नपहाय यवीयांसं । ८ क. °पादाय वि° । ९ ग. °ह यवीयांसं । १० ख. वा मोहात्तद्भवान्क्षन्तु° । ११ ख. °र्हेति । श° । १२ ख. °केशाप्यनया त° । ग. °केऽस्मिन्नन° । १३ क. त्वामशपन्माता ध° । क. ख. त्वामशपत्क्रोधाद्धर्म° । १४ क. °क्यते त° । १५ ग. क्रिमयो । १६ ख. °य पतस्यन्त्यत्र महीतलम् । कृ° । १७ ख. °त् । सक्रोधं तत्र चाऽऽयातम° । १८ क. शोभने । १९ ग. °म तन्मत° । २० ग. °जः पात° । २१ ग. °रं रूपम° । २२ क. स्वां प्रियां स दिवाकरः । अ° ।

मार्तण्डस्याऽऽत्मजावेतावष्टमस्य प्रजापतेः । तां तु रूपेण कान्तेन दर्शयामास भास्करः ॥ ४५
सा तु दृष्ट्वैव भर्तारं तुतोष मुनिसत्तमाः । यमस्तु कर्मणा तेन भृशं पीडितमानसः ॥ ४६
धर्मेण रञ्जयामास धर्मराज इमाः प्रजाः । स लेभे कर्मणा तेन शुभेन परमद्युतिः ॥ ४७
पितॄणामाधिपत्यं च लोकपालत्वमेव च । मनुः प्रजापतिस्त्वासीत्सावर्णिः स तपोधनाः ॥ ४८
भाव्यः समागते तस्मिन्मनुः सावर्णिकेऽन्तरे । मेरुपृष्ठे तपो नित्यमद्यापि स चरत्युत ॥ ४९
भ्राता शनैश्चरस्तस्य ग्रहत्वं स तु लब्धवान् । त्वष्टा तु तेजसा तेन विष्णोश्चक्रमकल्पयत् ॥ ५०
तदप्रतिहतं युद्धे दानवान्तचिकीर्षया । यवीयसी तु साऽप्यासीद्यमी कन्या यशस्विनी ॥ ५१
अभवच्च सरिच्छ्रेष्ठा यमुना लोकपावनी । मनुरित्युच्यते लोके सावर्ण इति चोच्यते ॥ ५२
द्वितीयो यः सुतस्तस्य मनोर्भ्राता शनैश्चरः । ग्रहत्वं स च लेभे वै सर्वलोकाभिपूजितः ॥ ५३
य इदं जन्म देवानां शृणुयान्नरसत्तमः । आपदं प्राप्य मुच्येत प्राप्नुयाच्च महद्यशः ॥ ५४

इति श्रीमहापुराणे ब्राह्म आदित्योत्पत्तिकथनं नाम षष्ठोऽध्यायः ॥ ६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७६

---

अथ सप्तमोऽध्यायः ।

---

लोमहर्षण उवाच—

मनोर्वैवस्वतस्याऽऽसन्पुत्रा वै नव तत्समाः । इक्ष्वाकुश्चैव नाभागो धृष्टः शर्यातिरेव च ॥ १
नरिष्यन्तश्च षष्ठो वै प्रांशू रिष्टश्च सप्तमः । करूषश्च पृषध्रश्च नवैते मुनिसत्तमाः ॥ २
अकरोत्पुत्रकामस्तु मनुरिष्टिं प्रजापतिः । मित्रावरुणयोर्विप्राः पूर्वमेव महामतिः ॥ ३
अनुत्पन्नेषु बहुषु पुत्रेष्वेतेषु भो द्विजाः । तस्यां च वर्तमानायामिष्ट्यां च द्विजसत्तमाः ॥ ४
मित्रावरुणयोरंशे मनुराहुतिमावहत् । तत्र दिव्याम्बरधरा दिव्याभरणभूषिता ॥ ५
दिव्यसंहनना चैव इला जज्ञ इति श्रुतिः । तामिलेत्येव होवाच मनुर्दण्डधरस्तदा ॥ ६
अनुगच्छस्व मां भद्रे तमिला प्रत्युवाच ह । धर्मयुक्तमिदं वाक्यं पुत्रकामं प्रजापतिम् ॥ ७

इलोवाच—

मित्रावरुणयोरंशे जाताऽस्मि वदतां वर । तयोः सकाशं यास्यामि न मां धर्महतां कुरु ॥ ८
सैवमुक्त्वा मनुं देवं मित्रावरुणयोरिला । गत्वाऽन्तिकं वरारोहा प्राञ्जलिर्वाक्यमब्रवीत् ॥ ९

इलोवाच—

अंशेऽस्मि युवयोर्जाता देवौ किं करवाणि वाम् । मनुना चाहमुक्ता वा अनुगच्छस्व मामिति ॥
तौ तथावादिनीं साध्वीमिलां धर्मपरायणाम् । मित्रश्च वरुणश्चोभावूचतुस्तां द्विजोत्तमाः ॥ ११

---

१ ख. °ण्डस्य सुतावे° । २ ख. °व्यः सोऽभ्याग° । ग. °व्यः सोऽप्याग° । ३ क. °हत्वमुपल° । ४ ग. °कभाविनी । ५ ख. विश्रुतः । ६ ख. °तीयस्तु सु° । ७ क. ख. सत्तमाः । ८ ख. °न्तस्तु ष° । ९ ख. °ष्ठो नाभागोऽरिष्टश्च सत्तमाः । क° । १० ग. पुग्ध्रश्च । ११ क. °स्तु मुनिरि° । १२ क. °माजुहोत् । १३ ख. °वपत् । १४ क. ख. °लेतीति हो° । १५ ख. °स्मिन्युव° ।

मित्रावरुणावूचतुः—

अनेन तव धर्मेण प्रश्रयेण दमेन च । सत्येन चैव सुश्रोणि प्रीतौ स्वो वरवर्णिनि ॥ १२
आवयोस्त्वं महाभागे ख्यातिं कन्येति यास्यसि ॥ १३
मनोर्वंशकरः पुत्रस्त्वमेव च भविष्यसि । सुद्युम्न इति विख्यातस्त्रिषु लोकेषु शोभने ॥ १४
जगत्प्रियो धर्मशीलो मनोर्वंशविवर्धनः । निवृत्ता सा तु तच्छ्रुत्वा गच्छन्ती पितुरन्तिकात् १५
बुधेनान्तरमासाद्य मैथुनायोपमन्त्रिता । सोमपुत्राद्बुधौ[3]द्विप्रास्तस्यां जज्ञे पुरूरवाः ॥ १६
जनयित्वा ततः सा तमिला सुद्युम्नतां गता । सुद्युम्नस्य तु दायादास्त्रयः[5] परमधार्मिकाः ॥ १७
उत्कलश्च गयश्चैव विनता[4]श्वश्च भो द्विजाः । उत्कलस्योत्कला विप्रा विनताश्वस्य पश्चिमाः ॥ १८
दिक्पूर्वा मुनिशार्दूला गयस्य तु गया स्मृता । प्रविष्टे तु मनौ विप्रा दिवाकरमरिंदमम् ॥ १९
दशधा[6] तत्पुनः क्षत्रमकरोत्पृथिवीमिमाम् । इक्ष्वाकु[7]र्ज्येष्ठदायादो मध्यदेशमवाप्तवान् ॥ २०
कन्याभावात्तु सुद्युम्नो नैत[8]द्राज्यमवाप्तवान् । वसिष्ठवचनात्त्वासीत्प्रतिष्ठाने महात्मनः ॥ २१
प्रतिष्ठा धर्मराजस्य सुद्युम्नस्य द्विजोत्तमाः । तत्पुरूरवसे प्रादाद्राज्यं प्राप्य महायशाः* ॥ २२
मानवेयो मुनिश्रेष्ठाः स्त्रीपुंसोर्लक्षणैर्युतः । धृतवांस्तामिले[10]त्येवं सुद्युम्नेति च विश्रुतः[11] ॥ २३
नारिष्यन्ताः शकाः पुत्रा नाभागस्य तु भो द्विजाः । अम्बरीषोऽभवत्पुत्रः पार्थिवर्षभसत्तमः[12] २४
धृष्टस्य धार्ष्टकं क्षत्रं रणदृप्तं बभूव ह । करूषस्य च कारूषाः क्षत्रिया युद्धदुर्मदाः ॥ २५
नाभागधृष्टपुत्राश्च क्षत्रिया वैश्यतां गताः । प्रांशोरेकोऽभवत्पुत्रः प्रजापतिरिति स्मृतः ॥ २६
नरिष्यन्तस्य दायादो राजा दण्डधरो यमः । शर्यातेर्मिथुनं त्वासीदानर्तो नाम विश्रुतः ॥ २७
पुत्रः कन्या सुकन्या च या पत्नी च्यवनस्य ह । आनर्तस्य तु दायादो रैवो[13] नाम महाद्युतिः २८
आनर्तविषयश्चैव पुरी चास्य कुशस्थली । रैवस्य रैवतः पुत्रः ककुद्मी नाम धार्मिकः ॥ २९
ज्येष्ठः पुत्रः[14] स तस्याऽऽसीद्राज्यं प्राप्य कुशस्थलीम् । स कन्यासहितः श्रुत्वा गान्धर्वं ब्रह्मणोऽन्तिके ॥ ३०
मुहूर्तभूतं देवस्य तस्थौ बहुयुगं द्विजाः । आजगाम स चैवाथ स्वां पुरीं[15] यादवैर्वृताम् ॥ ३१
कृतां[16] द्वारवतीं नाम बहुद्वारां मनोरमाम् । भोजवृष्ण्यन्धकैर्गुप्तां वसुदेवपुरोगमैः ॥ ३२
तत्रैव[17] रैवतो ज्ञात्वा यथातत्त्वं[18] द्विजोत्तमाः । कन्यां तां बलदेवाय सुभद्रां नाम रेवतीम् ॥ ३३
दत्त्वा जगाम शिखरं मेरोस्तपसि संस्थितः[19] । रेमे रामोऽपि धर्मात्मा रेवत्या सहितः सुखी ३४

मुनय ऊचुः—

कथं बहुयुगे काले समतीते महामते । न जरा रेवतीं प्राप्ता रैवतं च ककुद्मिनम् ॥ ३५

---

* एतदनन्तरं—"सुद्युम्नः कारयामास प्रतिष्ठाने नृपक्रियाम् । धृष्णुकश्चाम्बरीषश्च दण्डकश्चेति ते समाः । यश्चकार महात्मा वै दण्डकारण्यमुत्तमम् । यत्र प्रविष्टमात्रस्तु नरः पापात्प्रमुच्यते । सुद्युम्नश्च दिवं यात ऐलमुत्पाद्य भो द्विजाः" इति श्लोकद्वयं सार्धं क. पुस्तकेऽधिकं दृश्यते ।

---

१ क. मनुवंश° । २ क. °पशंसिता । ३ ख. °धाद्राजा तस्माज्जज्ञे । ४ क. त्रिजिता° । ५ क. त्रिजिता° । ६ क. °धा तदभूत्क्षत्र° । ग. °धा तु कुरुक्षेत्रम° । ७ ख °कुर्योऽष्टदा° । ८ ग. °तद्गुणम° । ९ ख. °नाद्याऽऽसी° । १० ख. °त्येव सु° । ११ ग. विश्रुतिः । १२ ख. °वस्त्वृषिसत्तमाः । धृ° । १३ ग. रेवो । १४ ख. ग. पुत्रशत° । १५ ख. °रीं पादपैर्वृ° । १६ ख. °तां द्वारवतीं नाम्ना ब° । १७ ख. ततस्तद्दैव° । १८ क. याथातथ्यं । १९ ग. संश्रितः ।

मेरुं गतस्य वा तस्य शर्यातेः संततिः कथम् । स्थिता पृथिव्यामद्यापि श्रोतुमिच्छाम तत्त्वतः॥३६

लोमहर्षण उवाच—

न जरा क्षुत्पिपासा वा न मृत्युर्मुनिसत्तमाः । ऋतुचक्रं प्रभवति ब्रह्मलोके सदाऽनघाः ॥
ककुद्मिनः स्वर्लोकं तु रैवतस्य गतस्य ह ॥ ३७
हृता पुण्यजनैर्विप्रा राक्षसैः सा कुशस्थली । तस्य भ्रातृशतं त्वासीद्धार्मिकस्य महात्मनः ॥ ३८
तद्वध्यमानं रक्षोभिर्दिशः प्राक्रामदच्युताः । विद्रुतस्य च विप्रेन्द्रास्तस्य भ्रातृशतस्य वै ॥ ३९
अन्ववायस्तु सुमहांस्तत्र तत्र द्विजोत्तमाः । तेषां ह्येते मुनिश्रेष्ठाः शर्याता इति विश्रुताः ॥ ४०
क्षत्रिया गुणसंपन्ना दिक्षु सर्वासु विश्रुताः । श(स)र्वशः सर्वगहनं प्रविष्टास्ते महौजसः ॥ ४१
नाभागरिष्टपुत्रौ द्वौ वैश्यौ ब्राह्मणतां गतौ । करूषस्य तु कारूषाः क्षत्रिया युद्धदुर्मदाः ॥ ४२
पृषध्रो हिंसयित्वा तु गुरोर्गां द्विजसत्तमाः । शापाच्छूद्रत्वमापन्नो नवैते परिकीर्तिताः ॥ ४३
वैवस्वतस्य तनया मुनेर्वै मुनिसत्तमाः । क्षुवतस्तु मनोर्विप्रा इक्ष्वाकुरभवत्सुतः ॥ ४४
तस्य पुत्रशतं त्वासीदिक्ष्वाकोर्भूरिदक्षिणम् । तेषां विकुक्षिर्ज्येष्ठस्तु विकुक्षित्वादयोधताम् ॥४५
प्राप्तः परमधर्मज्ञ सोऽयोध्याधिपतिः प्रभुः । शकुनिप्रमुखास्तस्य पुत्राः पञ्चशतं स्मृताः ॥ ४६
उत्तरापथदेशस्य रक्षितारो महाबलाः । चत्वारिंशद्दशाष्टौ च दक्षिणस्यां तथा दिशि ॥ ४७
वशातिप्रमुखाश्चान्ये रक्षितारो द्विजोत्तमाः । इक्ष्वाकुस्तु विकुक्षिं वा अष्टकायामथाऽऽदिशत् ४८
मांसमानय श्राद्धार्थं मृगान्हत्वा महाबल । श्राद्धकर्मणि चोदिष्टो अकृते श्राद्धकर्मणि ॥ ४९
भक्षयित्वा शशं विप्रा शशादो मृगयां गतः । इक्ष्वाकुणा परित्यक्तो वसिष्ठवचनात्प्रभुः ॥ ५०
इक्ष्वाकौ संस्थिते विप्राः शशादस्तु नृपोऽभवत् । शशादस्य तु दायादः ककुत्स्थो नाम वीर्यवान् ॥
अनेनास्तु ककुत्स्थस्य पृथुश्चानेनसः स्मृतः । विष्टराश्वः पृथोः पुत्रस्तस्मादार्द्रस्त्वजायत ॥ ५२
आर्द्रस्य युवनाश्वस्तु श्रावस्तस्तत्सुतो द्विजाः । जज्ञे श्रावस्तको राजा श्रावस्ती येन निर्मिता ॥
श्रावस्तस्य तु दायादो बृहदश्वो महीपतिः । कुवलाश्वः सुतस्तस्य राजा परमधार्मिकः ॥ ५४
यः स धुन्धुवधाद्राजा धुन्धुमारत्वमागतः ॥ ५५

मुनय ऊचुः—

धुन्धोर्वधं महाप्राज्ञ श्रोतुमिच्छाम तत्त्वतः । यद्वधात्कुवलाश्वोऽसौ धुन्धुमारत्वमागतः ॥ ५६

लोमहर्षण उवाच—

कुवलाश्वस्य पुत्राणां शतमुत्तमधन्विनाम् । सर्वे विद्यासु निष्णाता बलवन्तो दुरासदाः ॥ ५७
बभूवुर्धार्मिकाः सर्वे यज्वानो भूरिदक्षिणाः । कुवलाश्वं पिता राज्ये बृहदश्वो न्ययोजयत् ॥५८
पुत्रसंक्रामितश्रीस्तु वनं राजा विवेश ह । तमुत्तङ्कोऽथ विप्रर्षिः प्रयान्तं प्रत्यवारयत् ॥ ५९

---

१ क. °ति तत्र लो° । २ ख. °द्मिनश्च स्व° । ३ क. ग. हृता । ४ ख. °तं चाऽऽसी° । ५ ख. °दच्यु- त । वि° । ६ क. °माः । एवं ते तु मु° । ७ क. तेषामेते । ८ क. °ष्टाश्च म° । ९ ग. °क्षिणाः । ते° । १० क. °कुक्षिः श्रेष्ठ° । ११ क. विक्रमे रुद्रसंनिभः । प्रा° । ख. विक्रमेण समन्वितः । प्रा° । १२ क. °मन्नः पृथिव्याधि° । १३ ख. °शि । इणदप्र° । १४ ख. °नेनसः क° । १५ ख. °तः । वीराश्वस्तु पृ° । १६ क. विष्णोरंशः पृ° । १७ क. ख. यस्तु धु° । १८ क. °धं वयं ब्रह्मञ्श्रोतु° । १९ क. ख. सुतं । २० क. ख. °श्चोऽभ्यषेचय° । २१ ग. प्रयातं ।

उत्तङ्क उवाच—

त्वता रक्षणं कार्यं तच्च कर्तुं त्वमर्हसि । निरुद्विग्नस्तपश्चर्तुं* न हि शक्नोमि पार्थिव ॥ ६०
ाऽऽश्रमसमीपे वै समेषु मरुधन्वसु । समुद्रो वालुकापूर्ण उद्दालक इति स्मृतः ॥ ६१
वतानामवध्यश्च महाकायो महाबलः । अन्तर्भूमिगतस्तत्र वालुकान्तर्हितो महान् ॥ ६२
क्षसस्य मधोः पुत्रो धुन्धुर्नाम महासुरः । शेते लोकविनाशाय तप आस्थाय दारुणम् ॥ ६३
वत्सरस्य पर्यन्ते स निश्वासं विमुञ्चति । यदा तदा मही तत्र चलति स्म नराधिप ॥ ६४
स्य निःश्वासवातेन रज उद्धूयते महत् । आदित्यपथमावृत्य सप्ताहं भूमिकम्पनम् ॥ ६५
विस्फुलिङ्गं साङ्गारं सधूममतिदारुणम् । तेन तात न शक्नोमि तस्मिन्स्थातुं स्व आश्रमे ॥६६
मारय महाकायं लोकानां हितकाम्यया । लोकाः स्वस्था भवन्त्यद्य तस्मिन्विनिहते त्वया ॥
ं हि तस्य वधायैकः समर्थः पृथिवीपते । विष्णुना च वरो दत्तो मह्यं पूर्वयुगे नृप ॥ ६८
स्तं महासुरं रौद्रं हनिष्यति महाबलम् । तस्य त्वं वरदानेन तेजश्चाऽऽप्यायपयिष्यसि ॥ ६९
हि धुन्धुर्महातेजास्तेजसाऽल्पेन शक्यते । निर्दग्धुं पृथिवीपाल चिरं युगशतैरपि ॥ ७०
र्यं च सुमहत्तस्य देवैरपि दुरासदम् । स एवमुक्तो राजर्षिरुत्तङ्केन महात्मना ॥
वलाश्वं सुतं प्रादात्तस्मै धुन्धुनिबर्हणे ॥ ७१

बृहदश्व उवाच—

गवन्न्यस्तशस्त्रोऽहमयं तु तनयो मम । भविष्यति द्विजश्रेष्ठ धुन्धुमारो न संशयः ॥ ७२
तं व्यादिश्य तनयं राजर्षिर्धुन्धुमारणे । जगाम पर्वतायैव नृपतिः संशितव्रतः ॥ ७३

लोमहर्षण उवाच—

वलाश्वस्तु पुत्राणां शतेन सह भो द्विजाः । प्रायादुत्तङ्कसहितो धुन्धोस्तस्य निबर्हणे ॥ ७४
माविशत्तदा विष्णुस्तेजसा भगवान्प्रभुः । उत्तङ्कस्य नियोगाद्वै लोकानां हितकाम्यया ॥ ७५
स्मिन्प्रयाते दुर्धर्षे दिवि शब्दो महानभूत् । एष श्रीमानवध्योऽद्य धुन्धुमारो भविष्यति ॥ ७६
दिव्यैर्गन्धैश्च माल्यैश्च तं देवाः समवाकिरन् । देवदुन्दुभयश्चैव प्रणेदुर्द्विजसत्तमाः ॥ ७७
ा गत्वा जयतां श्रेष्ठस्तनयैः सह वीर्यवान् । समुद्रं खानयामास वालुकान्तरमव्ययम् ॥ ७८
स्य पुत्रैः खनद्भिश्च वालुकान्तर्हितस्तदा । धुन्धुरासादितो विप्रा दिशमावृत्य पश्चिमाम् ॥ ७९
मुखजेनाग्निना क्रोधाल्लोकानुद्वर्तयन्निव । वारिसुस्राववेगेन महोदधिरिवोदये ॥ ८०
सोमस्य मुनिशार्दूला वरोर्मिकलिलो महान् । तस्य पुत्रशतं दग्धं त्रिभिरूनं तु रक्षसा ॥ ८१
ततः स राजा द्युतिमान्राक्षसं तं महाबलम् । आससाद महातेजा धुन्धुं धुन्धुविनाशनः ॥ ८२
तस्य वारिमयं वेगमापीय स नराधिपः । योगी योगेन वह्निं च शमयामास वारिणा ॥ ८३
निहत्य तं महाकायं बलेनोदकराक्षसम् । उत्तङ्कं दर्शयामास कृतकर्मा नराधिपः ॥ ८४
उत्तङ्कस्तु वरं प्रादात्तस्मै राज्ञे महात्मने । ददौ तस्याक्षयं वित्तं शत्रुभिश्चापराजितम् ॥ ८५

---

* इत्यभाव आर्षः ।

---

१ क. ख. कर्तुमिहार्ह° । २ ख. °मुद्रवा° । ३ ख. उज्जानक° । ४ ख. °तः । दैत्य° । ५ ख. अनुभूमि° । ६ क. °स्तु म° । ७ ख. °रः । स तु लो° । ८ क. लोकाश्च सुखमेधन्ते त° । ९ क. ख. °श्च समन्तातम° । १० ख. °दुर्हि तदा भृशम् । स । ११ क. श्रेष्ठैस्त° । १२ ख. योगियो° । १३ क. विशस्य । ग. निरस्य ।

धर्मे रतिं च सततं स्वर्गे वासं तथाऽक्षयम् । पुत्राणां चाक्षयाँल्लोकान्स्वर्गे ये रक्षसा हताः ॥८६
तस्य पुत्रास्त्रयः शिष्टा दृढाश्वो ज्येष्ठ उच्यते । चन्द्राश्वकपिलाश्वौ तु कनीयांसौ कुमारकौ ॥८७
धौन्धुमारेर्दृढाश्वस्य हर्यश्वश्चाऽऽत्मजः स्मृतः । हर्यश्वस्य निकुम्भोऽभूत्क्षत्रधर्मरतः सदा ॥ ८८
संहताश्वो निकुम्भस्य सुतो रणविशारदः । अकृशाश्वकृशाश्वौ तु संहताश्वसुतौ द्विजाः ॥ ८९
तस्य हैमवती कन्या सतां मता दृषद्वती । विख्याता त्रिषु लोकेषु पुत्रश्चास्याः प्रसेनजित् ॥९०
लेभे प्रसेनजिद्भार्यां गौरीं नाम पतिव्रताम् । अभिशस्ता तु सा भ[3]र्त्रा नदी वै बाहुदाऽभवत् ९१
त[4]स्य पुत्रो महानासीद्युवनाश्वो नराधिपः । मांधाता युवनाश्वस्य त्रिलोकविजयी सुतः ॥ ९२
तस्य चैत्ररथी भार्या शशबिन्दोः सुताऽभवत् । सा[5]ध्वी बिन्दुमती नाम रूपेणासदृशी भुवि॥९३
पतिव्रता च ज्येष्ठा च भ्रातॄणामयुतस्य वै । तस्यामुत्पादयामास मांधाता द्वौ सुतौ द्विजाः॥ ९४
पुरुकुत्सं च धर्मज्ञं मुचुकुन्दं च पार्थिवम् । पुरुकुत्ससुतस्त्वासीत्त्रसदस्युर्महीपतिः ॥ ९५
नर्मदायामथोत्पन्नः सं[6]भूतस्तस्य चाऽऽत्मजः । संभूतस्य तु दायादस्त्रिधन्वा रिपुमर्दनः ॥ ९६
राज्ञस्त्रिधन्वनस्त्वासीद्वि[8]द्वांस्त्रय्यारुणः प्रभुः । तस्य सत्यव्रतो नाम कुमारोऽभून्महाबलः ॥ ९७
परिग्रहणमन्त्राणां विघ्नं चक्रे सुदुर्मतिः । येन भार्या कृतोद्वाहा हृ[9]ता चैव परस्य ह ॥ ९८
बाल्यात्कामाच्च मोहाच्च साहसाच्चापलेन च । जहार कन्यां कामार्तः कस्यचित्पुरवासिनः ॥९९
अधर्मशङ्कुना तेन तं स त्रय्यारुणोऽत्यजत् । अपध्वंसेति बहुशो वदन्क्रोधसमन्वितः ॥ १००
सोऽब्रवीत्पितरं त्य[10]क्तः क्व गच्छामीति वै मुहुः । पिता च तमथोवाच श्व[11]पाकैः सह वर्तय १०१
नाहं [12]पुत्रेण पुत्रार्थी त्वयाऽद्य कुलपांसन । इत्युक्तः स निराक्रामन्नगराद्वचनात्पितुः ॥ १०२
न च तं वारयामास वसिष्ठो भगवानृषिः । स तु सत्यव्रतो विप्रा[13]ः श्वपाकावसथान्तिके ॥ १०३
पित्रा त्यक्तोऽवसद्वीरः पिताऽप्यस्य वनं ययौ । ततस्तस्मिंस्तु विषये नावर्षत्पाकशासनः॥१०४
समा द्वादश भो विप्रास्तेनाधर्मेण वै तदा । दारांस्तु तस्य विषये विश्वामित्रो महातपाः ॥१०५
संन्यस्य सागरान्ते तु चकार विपुलं तपः । तस्य पत्नी गले बद्ध्वा मध्यमं पुत्रमौरसम् ॥ १०६
शेषस्य भरणार्थाय व्यक्रीणा[14]द्गोशतेन वै । तं च बद्धं गले दृष्ट्वा विक्रयार्थं नृपात्मजः ॥ १०७
महर्षिपुत्रं धर्मात्मा मोक्षयामास भो द्विजाः । सत्यव्रतो महाबाहुर्भरणं तस्य चाकरोत् ॥ १०८
विश्वामित्रस्य तुष्ट्यर्थमनुकम्पार्थमेव च । सोऽभवद्गालवो नाम गले बन्धान्महातपाः ॥
महर्षिः कौशिको धीमांस्तेन वीरेण मोक्षितः ॥ १०९

इति श्रीमहापुराणे ब्राह्मे सूर्यवंशनिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५८५

---

अथाष्टमोऽध्यायः ।

---

लोमहर्षण उवाच—

सत्यव्रतस्तु [15]भक्त्या च कृपया च प्रतिज्ञया । विश्वामित्रकलत्रं तु बभार विनये [16]स्थितः ॥ १

---

१ ग. शिष्टाः सुदासो ज्ये° । २ क. ख. स्मृतः । ३ ख. ग. भार्या । ४ ग. तस्याः । ५ क. °ध्वी चेन्दुम° । ६ क. °भूतिस्त° । ७ क. °भूतेर्थैव दा° । ८ ख. °द्विद्वान्वत्रारु° । ९ ग. हता । १० ख. त्यक्त्वा । ११ ख. पातकैः । १२ ख. दुष्टेन । १३ ख. °प्राः पुरस्य स्वस्य चान्ति° । १४ ख. °णादाश° । १५ ख. भगवान्कृप° । १६ क. स्थितम् ।

हत्वा मृगान्वराहांश्च महिषांश्च वनेचरान् । विश्वामित्राश्रमाभ्याशे मांसं वृक्षे बबन्ध च ॥ २
उपांशुव्रतमास्थाय दीक्षां द्वादशवार्षिकीम् । पितुर्नियोगादवसत्तस्मिन्वनगते नृपे ॥ ३
अयोध्यां चैव राज्यं च तथैवान्तःपुरं मुनिः । याज्योपाध्यायसंयोगाद्वसिष्ठः पर्यरक्षत[1] ॥ ४
सत्यव्रतस्तु बाल्याच्च भाविनोऽर्थस्य वै बलात् । वसिष्ठेऽभ्यधिकं मन्युं धारयामास नित्यशः ५
पित्रा हि तं तदा राष्ट्रात्त्यज्यमानं प्रियं सुतम् । निवारयामास मुनिर्बहुना कारणेन न ॥ ६
पाणिग्रहणमन्त्राणां निष्ठा स्यात्सप्तमे पदे । न च सत्यव्रतस्तस्माद्धृतवान्सप्तमे पदे ॥ ७
जानन्धर्मं वसिष्ठस्तु न मां त्रातीति भो द्विजाः । सत्यव्रतस्तदा रोषं वसिष्ठे मनसाऽकरोत् ॥८
गुणबुद्ध्या तु भगवान्वसिष्ठः कृतवांस्तथा । न च सत्यव्रतस्तस्य तमुपांशुमबुध्यत ॥ ९
तस्मिन्नपरितोषश्च पितुरासीन्महात्मनः । तेन द्वादश वर्षाणि नावर्षत्पाकशासनः ॥ १०
तेन त्विदानीं विहितां दीक्षां तां दुर्वहां भुवि । कुलस्य निष्कृतिर्विप्राः कृता सा वै भवेदिति ॥
न तं वसिष्ठो भगवान्पित्रा त्यक्तं न्यवारयत् । अभिषेक्ष्याम्यहं पुत्रमस्येत्येवंमतिर्मुनिः ॥ १२
स तु द्वादश वर्षाणि तां दीक्षामवहद्बली । अविद्यमाने मांसे तु वसिष्ठस्य महात्मनः ॥ १३
सर्वकामदुघां दोग्ध्रीं स ददर्श नृपात्मजः । तां वै क्रोधाच्च मोहाच्च श्रमाच्चैव क्षुधाऽन्वितः ॥१४
देशधर्मगतो राजा जघान[3] मुनिसत्तमाः । तन्मांसं स[4] स्वयं चैव विश्वामित्रस्य चाऽऽत्मजान् १५
भोजयामास तच्छ्रुत्वा वसिष्ठोऽप्यस्य चुक्रुधे ॥ १६

वसिष्ठ उवाच—

पातयेयमहं क्रूर तव शङ्कुमसंशयम्[5] । यदि ते द्वाविमौ शङ्कू न स्यातां वै कृतौ पुनः ॥ १७
पितुश्चापरितोषेण गुरुदोग्ध्री[6]वधेन च । अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः ॥ १८
एवं त्रीण्यस्य शङ्कूनि तानि दृष्ट्वा महातपाः । त्रिशङ्कुरिति होवाच त्रिशङ्कुस्तेन स स्मृतः[7] १९
विश्वामित्रस्य दाराणा[8]मनेन भरणं कृतम् । तेन तस्मै वरं प्रादान्मुनिः प्रीतस्त्रिशङ्कवे ॥ २०
छन्द्यमानो वरेणाथ वरं वव्रे नृपात्मजः । सशरीरो व्रजे स्वर्गमित्येवं याचितो वरः ॥ २१
अनावृष्टिभये तस्मिन्गते द्वादशवार्षिके । पित्र्ये राज्येऽभिषिच्याथ याजयामास पार्थिवम् ॥ २२
मिषतां देवतानां च वसिष्ठस्य च कौशिकः । दिवमारोपयामास सशरीरं महातपाः ॥ २३
तस्य सत्यरथा नाम पत्नी कैकेयवंशजा । कुमारं जनयामास हरिश्चन्द्रमकल्मषम् ॥ २४
स वै राजा हरिश्चन्द्रस्त्रैशङ्कव इति स्मृतः । आहर्ता राजसूयस्य सम्राडिति ह विश्रुतः ॥ २५
हरिश्चन्द्रस्य पुत्रोऽभूद्रोहितो नाम पार्थिवः[9] । हरितो रोहितस्याथ[10] चञ्चुर्हारित उच्यते ॥ २६
विजयश्च मुनिश्रेष्ठा[11]श्चञ्चुपुत्रो बभूव ह । जेता स सर्वपृथिवीं विजयस्तेन स स्मृतः ॥ २७
रुरुक[12]स्तनयस्तस्य राजा धर्मार्थकोविदः । रुरुक[13]स्य वृकः पुत्रो वृकाद्बाहुस्तु जज्ञिवान् ॥ २८
हैहया[14]स्तालजङ्घाश्च निरस्यन्ति स्म तं नृपम्[15] । तत्पत्नी गर्भमादाय और्वस्याऽऽश्रममाविशत् २९
नासत्यो[16] धार्मिकश्चैव स ह धर्मयुगेऽभवत् । सगरस्तु सुतो बाहोर्यज्ञे सह गरेण वै ॥ ३०

---

१ ख. ग. नित्यदा । २ ख. °तः । हत्वा धेनुं ततो रा° । ३ ख. जगाम । ४ ख. तु । ५ ख. शङ्कुं न संशयः । य° । ६ क. ख. गुरोर्दोग्ध्री° । ७ क. ख. °त्रस्तु दा° । ८ क. ख. °णामागतो भरणे कृते । ततस्तस्मै । ९ क. धार्मिकः । १० ख. °थ चुम्चुर्हा° । ११ ख. °ष्ठाश्चुम्चुपु° । १२ ख. रुरुक° । १३ ख. रुरुक° । १४ ग. °हयाः काल° । १५ क. ख. नृपाः । १६ ग. नात्यर्थं ।

और्वस्याऽऽश्रममासाद्य भार्गवेणाभिरक्षितः। आग्नेयमस्त्रं लब्ध्वा च भार्गवात्सगरो नृपः ॥ ३१
जिगाय पृथिवीं हत्वा तालजङ्घान्सहैहयान्। शकानां पह्लवानां च धर्मं निरसदच्युतः ॥
क्षत्रियाणां मुनिश्रेष्ठाः पारदानां च धर्मवित् ॥ ३२

मुनय ऊचुः—

कथं स सगरो जातो गरेणैव सहाच्युतः। किमर्थं च शकादीनां क्षत्रियाणां महौजसाम् ॥ ३३
धर्मान्कुलोचितान्राजा क्रुद्धो निरसदच्युतः। एतन्नः सर्वमाचक्ष्व विस्तरेण महामते ॥ ३४

लोमहर्षण उवाच—

बाहोर्व्यसनिनः पूर्वं हृतं राज्यमभूत्किल। हैहयैस्तालजङ्घैश्च शकैः सार्धं द्विजोत्तमाः ॥ ३५
यवनाः पारदाश्चैव काम्बोजाः पह्लवास्तथा। एते ह्यपि गणाः पञ्च हैहयार्थे पराक्रमन् ॥ ३६
हृतराज्यस्तदा राजा स वै बाहुर्वनं ययौ। पत्न्या चानुगतो दुःखी तत्र प्राणानवासृजत् ॥ ३७
पत्नी तु यादवी तस्य सगर्भा पृष्ठतोऽन्वगात्। सपत्न्या च गरस्तस्यै दत्तः पूर्वं किलानघाः ३८
सा तु भर्तुश्चितां कृत्वा वने तामभ्यरोहत। और्वस्तां भार्गवो विप्राः कारुण्यात्समवारयत् ॥ ३९
तस्याऽऽश्रमे च गर्भः स गरेणैव सहाच्युतः। व्यजायत महाबाहुः सगरो नाम पार्थिवः ॥ ४०
और्वस्तु जातकर्मादींस्तस्य कृत्वा महात्मनः। अध्याप्य वेदशास्त्राणि ततोऽस्त्रं प्रत्यपादयत् ॥ ४१
आग्नेयं तु महाभागा अमरैरपि दुःसहम्। स तेनास्त्रबलेनाऽऽजौ बलेन च समन्वितः ॥ ४२
हैहयान्विजघानाऽऽशु क्रुद्धो रुद्रः पशूनिव। आजहार च लोकेषु कीर्तिं कीर्तिमतां वरः ॥ ४३
ततः शकांश्च यवनान्काम्बोजान्पारदांस्तथा। पह्लवांश्चैव निःशेषान्कर्तुं व्यवसितो नृपः ॥ ४४
ते वध्यमाना वीरेण सगरेण महात्मना। वसिष्ठं शरणं गत्वा प्रणिपेतुर्मनीषिणम् ॥ ४५
वसिष्ठस्त्वथ तान्दृष्ट्वा समयेन महाद्युतिः। सगरं वारयामास तेषां दत्त्वाऽभयं तदा ॥ ४६
सगरः स्वां प्रतिज्ञां तु गुरोर्वाक्यं निशम्य च। धर्मं जघान तेषां वै वेषानन्यांश्चकार ह ॥ ४७
अर्धं शकानां शिरसो मुण्डयित्वा व्यसर्जयत्। यवनानां शिरः सर्वं काम्बोजानां तथैव च ॥ ४८
पारदा मुक्तकेशाश्च पह्लवाञ्श्मश्रुधारिणः। निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना ॥ ४९
शका यवनकाम्बोजाः पारदाश्च द्विजोत्तमाः। कोणिसर्पा माहिषका दर्वाश्चोलाः सकेरलाः ५०
सर्वे ते क्षत्रिया विप्रा धर्मस्तेषां निराकृतः। वसिष्ठवचनाद्राज्ञा सगरेण महात्मना ॥ ५१
स धर्मविजयी राजा विजित्येमां वसुंधराम्। अश्वं प्रचारयामास वाजिमेधाय दीक्षितः ॥ ५२
तस्य चारयतः सोऽश्वः समुद्रे पूर्वदक्षिणे। वेलासमीपेऽपहृतो भूमिं चैव प्रवेशितः ॥ ५३
स तं देशं तदा पुत्रैः खानयामास पार्थिवः। आसेदुस्ते तदा तत्र खन्यमाने महार्णवे ॥ ५४
तमादिपुरुषं देवं हरिं कृष्णं प्रजापतिम्। विष्णुं कपिलरूपेण स्वपन्तं पुरुषं तदा ॥ ५५
तस्य चक्षुःसमुत्थेन तेजसा प्रतिबुध्यतः। दग्धाः सर्वे मुनिश्रेष्ठाश्चत्वारस्त्ववशेषिताः ॥ ५६
[10]बर्हिकेतुः सुकेतुश्च तथा [11]धर्मरथो नृपः। [12]शूरः [13]पञ्चनदश्चैव तस्य वंश[14]करा नृपाः ॥ ५७

---

१ ख. °मध्यरो° । २ ख. °व । लेभे सदा म लो° । ३ ख. यशः । ४ ख. तदा स य° । ५ ख. °नान्राजा काम्बो°
६ ख. °गरस्तां प्र° । ७ क. °माः । केलिसर्गा महाषीका और्वाश्चांडाः स° । ख. °माः । केलमर्गा माहिषदा द्राश्चोलाश्च स°
८ क. ख. कृतास्त्रेण । ९ क. ख. स्वयंभूं । १० ख. ग. बर्हके° । ११ क. बार्हरथो । ख. बार्हद्रथो । १२ ख. ग. स्वरः
१३ क. °श्वजनश्चै° । १४ ख. °करोऽभवत् । प्रा° ।

प्रादाच्च तस्मै भगवान्हरिर्नारायणो वरम् । अक्षयं वंशमिक्ष्वाकोः कीर्तिं चाप्यनिवर्तिनीम् ॥ ५८
पुत्रं समुद्रं च विभुः स्वर्गे वासं तथाऽक्षयम् । समुद्रश्चार्घमादाय ववन्दे तं महीपतिम् ॥ ५९
सागरत्वं च लेभे स कर्मणा तेन तस्य ह । तं चाऽऽश्वमेधिकं सोऽश्वं समुद्रादुपलब्धवान् ॥ ६०
आजहाराश्वमेधानां शतं स सुमहातपाः । पुत्राणां च सहस्राणि षष्टिस्तस्येति नः श्रुतम् ॥ ६१

मुनय ऊचुः—

सगरस्याऽऽत्मजा वीराः कथं जाता महाबलाः । विक्रान्ताः षष्टिसाहस्रा विधिना केन सत्तम ॥

लोमहर्षण उवाच—

द्वे भार्ये सगरस्याऽऽस्तां तपसा दग्धकिल्बिषे । ज्येष्ठा विदर्भदुहिता केशिनी नाम नामतः ॥ ६३
कनीयसी तु महती पत्नी परमधर्मिणी । अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि ॥ ६४
और्वस्ताभ्यां वरं प्रादात्तद्बुध्यध्वं द्विजोत्तमाः । षष्टिं पुत्रसहस्राणि गृह्णात्वेका नितम्बिनी[3] ६५
एकं वंशधरं त्वेका यथेष्टं वरयत्विति । तत्रैका जगृहे पुत्रान्षष्टिसाहस्रसंमितान् ॥ ६६
एकं वंशधरं त्वेका तथेत्याह ततो मुनिः । राजा पञ्चजनो नाम बभूव स महाद्युतिः ॥ ६७
इतरा सुषुवे तुम्बीं बीजपूर्णामिति श्रुतिः । तत्र षष्टिसहस्राणि गर्भास्ते तिलसंमिताः ॥ ६८
संबभूवुर्यथाकालं ववृधुश्च यथासुखम् । घृतपूर्णेषु कुम्भेषु तान्गर्भान्निदधे ततः ॥ ६९
धात्रीश्चैकैकशः प्रादात्तावतीः पोषणे नृपः । ततो दशसु मासेषु समुत्तस्थुर्यथाक्रमम् ॥ ७०
कुमारास्ते यथाकालं सगरप्रीतिवर्धनाः । [*षष्टिपुत्रसहस्राणि तस्यैवमभवन्द्विजाः ॥ ७१
गर्भादलाबूमध्याद्वै जातानि पृथिवीपतेः । तेषां नारायणं तेजः प्रविष्टानां महात्मनाम् ] ॥ ७२
एकः पञ्चजनो नाम पुत्रो राजा बभूव ह । शूरः पञ्चजनस्याऽऽसीदंशुमान्नाम वीर्यवान् ॥ ७३
दिलीपस्तस्य तनयः खट्वाङ्ग इति विश्रुतः । येन स्वर्गादिहाऽऽगत्य मुहूर्तं प्राप्य जीवितम् ॥ ७४
त्रयोऽभिसंधिता लोका बुद्ध्या सत्येन चानघाः । दिलीपस्य तु दायादो महाराजो भगीरथः ॥
यः स गङ्गां सरिच्छ्रेष्ठामवातारयत प्रभुः । समुद्रमानयच्चैनां दुहितृत्वेऽप्यकल्पयत् ॥ ७६
तस्माद्भागीरथी गङ्गा कथ्यते वंशचिन्तकैः[12] । भगीरथसुतो राजा श्रुत इत्यभिविश्रुतः ॥ ७७
नाभागस्तु श्रुतस्याऽऽसीत्पुत्रः परमधार्मिकः । अम्बरीषस्तु नाभागिः सिन्धुद्वीपपिताऽभवत् ॥ ७८
अयुताजित्तु दायादः सिन्धुद्वीपस्य वीर्यवान् । अयुताजित्सुतस्त्वासीदृतुपर्णो[13] महायशाः ॥ ७९
दिव्याक्षहृदयज्ञो वै राजा नलसखो बली । ऋतुपर्णसुतस्त्वासीदार्तपर्णिर्महायशाः ॥ ८०
सुदासस्तस्य तनयो राजा इन्द्रसखोऽभवत् । सुदासस्य सुतः प्रोक्तः सौदासो नाम पार्थिवः ॥
ख्यातः कल्माषपादो[14] वै राजा मित्रसहोऽभवत् । कल्माषपादस्य सुतः सर्वकर्मेति विश्रुतः ॥ ८२
अनरण्यस्तु पुत्रोऽभूद्विश्रुतः सर्वकर्मणः । अनरण्यसुतो निघ्नो निघ्नतो द्वौ बभूवतुः ॥ ८३
अनमित्रो रघुश्चैव पार्थिवर्षभसत्तमौ । अनमित्रसुतो राजा विद्वान्दु[15]लिदुहोऽभवत् ॥ ८४

---

* धनुश्चिह्नान्तर्गतः पाठः क. पुस्तके नास्ति ।

---

१ क. ख. °हायशाः । पु° । २ क. ख. सूतज । ३ ख. तपस्विनी । ग. तरस्विनी । ४ ग. °त्राल्लुब्धाञ्शूरान्बहूं-स्तथा । ए° । ५ क. ततोऽथ दशमे मासे स° । ६ ख. सुतः । ७ क. °सीद्विसुमा° । ८ क. °म् । ततो भि° । ९ ख. °भिवन्दिता । १० ग. महारथो । ११ क. °थः । स्वर्गात्स तु स° । १२ क. धर्मचिन्तकैः । १३ ख. °र्णस्य तस्याऽऽसी° । १४ ग. °दोऽभून्नाम्ना मि° । १५ क. °न्दुहितहो° ।

दिलीपस्तनयस्तस्य रामस्य प्रपितामहः । दीर्घबाहुर्दिलीपस्य रघुर्नाम्ना सुतोऽभवत् ॥ ८५
अयोध्यायां महाराजो[1] यः पुराऽऽसीन्महाबलः । अजस्तु राघवो जज्ञे तथा[2] दशरथोऽप्यजात् ॥
रामो दशरथाज्जज्ञे धर्मात्मा सुमहायशाः । रामस्य तनयो जज्ञे कुश इत्यभिसंज्ञितः ॥ ८७
अतिथिस्तु कुशाज्जज्ञे धर्मात्मा सुमहायशाः । अतिथेस्त्वभवत्पुत्रो निषधो नाम वीर्यवान् ॥ ८८
निषधस्य नलः पुत्रो नभः पुत्रो नलस्य तु । नैभस्य[3] पुण्डरीकस्तु क्षेमधन्वा ततः स्मृतः ॥ ८९
क्षेमधन्वसुतस्त्वासीद्देवानीकः प्रतापवान् । आसीदहीनगुर्नाम देवानीकात्मजः प्रभुः ॥ ९०
अहीनगोस्तु दायादः सुधन्वा नाम पार्थिवः । सुधन्वनः सुतश्चापि ततो जज्ञे शलो नृपः ॥ ९१
उक्थो नाम स धर्मात्मा शलपुत्रो बभूव ह । वज्रनाभः सुतस्तस्य नलस्तस्य महात्मनः ॥ ९२
नलौ द्वावेव विख्यातौ पुराणे मुनिसत्तमाः । वीरसेनात्मजश्चैव यश्चेक्ष्वाकुकुलोद्वहः ॥ ९३
इक्ष्वाकुवंशप्रभवाः प्राधान्येन प्रकीर्तिताः । एते विवस्वतो वंशे राजानो भूरितेजसः ॥ ९४
पठन्सम्यगिमां सृष्टिमादित्यस्य विवस्वतः । श्राद्धदेवस्य [4]देवस्य प्रजानां पुष्टिदस्य च ॥
प्रजावानेति सायुज्यमादित्यस्य विवस्वतः ॥ ९५

इति श्रीमहापुराणे ब्राह्म आदित्यवंशानुकीर्तनं नामाष्टमोऽध्यायः ॥ ८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६८०

---

अथ नवमोऽध्यायः ।

---

लोमहर्षण उवाच—

पिता सोमस्य भो विप्रा जज्ञेऽत्रिर्भगवानृषिः । ब्रह्मणो मानसात्पूर्वं प्रजासर्गं विधित्सतः ॥ १
अनुत्तरं नाम तपो येन तप्तं हि तत्पुरा । त्रीणि वर्षसहस्राणि दिव्यानीति हि नः श्रुतम् ॥ २
ऊर्ध्वमाचक्रमे तस्य रेतः सोमत्वमीयिवत् । नेत्राभ्यां वारि सुस्राव दशधा द्योतयन्दिशः ॥ ३
तं गर्भं विधिनाऽऽदिष्टा दश देव्यो दधुस्ततः । समेत्य धारयामासुर्न च ताः समशक्नुवन् ॥ ४
यदा न धारणे शक्तास्[5]तस्य गर्भस्य ता दिशः । ततस्ताभिः सं त्यक्तस्तु निपपात वसुंधराम् ॥ ५
पतितं सोममालोक्य ब्रह्मा लोकपितामहः । रथमारोपयामास लोकानां हितकाम्यया ॥ ६
तस्मिन्निपतिते देवाः[7] पुत्रेऽत्रेः[8] परमात्मनि । तुष्टुवुर्ब्रह्मणः पुत्रास्तथाऽन्ये मुनिसत्तमाः ॥ ७
तस्य संस्तूयमानस्य तेजः सोमस्य भास्वतः । आप्यायनाय लोकानां भावयामास सर्वतः ॥ ८
स तेन रथमुख्येन सागरान्तां वसुंधराम् । त्रिःसप्तकृत्वोऽतियशाश्चकाराभिप्रदक्षिणाम् ॥ ९
तस्य [11]यच्चरितं तेजः पृथिवी[12]मन्वपद्यत । ओषध्यस्ताः समुद्भूता याभिः संधार्यते जगत् ॥ १०
स लब्धतेजा भगवान्संस्तवैश्च स्वकर्मभिः । तपस्तेपे महाभागः पद्मानां [13]दर्शनाय सः ॥ ११
ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदां वरः । बीजौषधीनां[14] विप्राणामपां च मुनिसत्तमाः ॥ १२
स तत्प्राप्य महाराज्यं सोमः सौम्यवतां वरः । समाजह्रे राजसूयं सहस्रशतदक्षिणम् ॥ १३

---

१ ख. °जो रघुरासी° । २ ख. तस्माद्दशरथोऽभवत् । ३ ख. नभसः । ४ ख. वीरस्य । ५ ख. °सं महत्सु° । ६ ख. °क्तास्ता गर्भस्य दिशो दश । त° । ७ ग. सहैवाऽऽशु नि° । ८ ख. देवे । ९ ख. °त्रे च सुमहात्म° । १० ख. °था ते मु° । ११ क. यंत्स्रावितं । ख. यच्चाधितं । १२ ख. °थिवीं समप° । १३ ग. दशतीर्दश । त° । १४ क. °नां राजानं निर्ममे मु° ।

क्षिणामददात्सोमस्त्रींल्लोकानिति नः श्रुतम् । तेभ्यो ब्रह्मर्षिमुख्येभ्यः सदस्येभ्यश्च भो द्विजाः
रण्यगर्भो ब्रह्माऽत्रिर्भृगुश्च ऋत्विजोऽभवत् । सदस्योऽभूद्धरिस्तत्र मुनिभिर्बहुभिर्वृतः ॥ १५
सिनीश्च कुहूश्चैव द्युतिः पुष्टिः प्रभा वसुः । कीर्तिर्धृतिश्च लक्ष्मीश्च नव देव्यः सिषेविरे ॥१६
आप्यावभृथमप्यग्र्यं सर्वदेवर्षिपूजितः । विरराजाधिराजेन्द्रो दशधा भासयन्दिशः ॥ १७
स्य तत्प्राप्य दुष्प्राप्यमैश्वर्यमृषिसत्कृतम् । विबभ्राम मतिस्तातविनयादनयाहृता ॥ १८
हस्पतेः स वै भार्यामैश्वर्यमदमोहितः । जहार तरसा सोमो विमत्याङ्गिरसः सुतम् ॥ १९
याच्यमानो देवैश्च तथा देवर्षिभिर्मुहुः । नैव व्यसर्जयत्तारां तस्मा अङ्गिरसे तदा ॥ २०
शना तस्य जग्राह पार्ष्णिमङ्गिरसस्तथा । रुद्रश्च पार्ष्णिं जग्राह गृहीत्वाऽजगवं धनुः ॥ २१
न ब्रह्मशिरो नाम परमास्त्रं महात्मना । उद्दिश्य देवानुत्सृष्टं येनैषां नाशितं यशः ॥ २२
त्र तद्युद्धमभवत्प्रख्यातं तारकामयम् । +देवानां दानवानां च लोकक्षयकरं महत् ॥ २३
तत्र शिष्टास्तु ये देवास्तुषिताश्चैव ये द्विजाः । ब्रह्माणं शरणं जग्मुरादिदेवं सनातनम् ॥ २४
दा निवार्योशनसं तं वै रुद्रं च शंकरम् । ददावङ्गिरसे तारां स्वयमेव पितामहः ॥ २५
मन्तःप्रसवां दृष्ट्वा क्रुद्धः प्राह बृहस्पतिः । मदीयायां न ते योनौ गर्भो धार्यः कथंचन ॥ २६
षीकास्तम्बमासाद्य गर्भं सा चोत्ससर्ज ह । जातमात्रः स भगवान्देवानामाक्षिपद्वपुः ॥ २७
तः संशयमापन्नास्तारामूचुः सुरोत्तमाः । सत्यं ब्रूहि सुतः कस्य सोमस्याथ बृहस्पतेः ॥ २८
च्छ्यमाना यदा देवैर्नाऽऽह सा विबुधान्किल । तदा तां शप्तुमारब्धः कुमारो दस्युहन्तमः २९
निवार्य ततो ब्रह्मा तारां पप्रच्छ संशयम् । यदत्र तथ्यं तद्ब्रूहि तारे कस्य सुतस्त्वयम् ॥३०
वाच प्राञ्जलिः सा तं सोमस्येति पितामहम् । तदा तं मूर्ध्नि चाऽऽघ्राय सोमो राजा सुतं प्रति
ध इत्यकरोन्नाम तस्य बालस्य धीमतः । प्रतिकूलं च गगने समभ्युत्तिष्ठते बुधः ॥ ३२
त्पादयामास तदा पुत्रं वैराजपुत्रिकम् । तस्यापत्यं महातेजा बभूवैलः पुरूरवाः ॥ ३३
र्वश्यां जज्ञिरे यस्य पुत्राः सप्त महात्मनः । एतत्सोमस्य वो जन्म कीर्तितं कीर्तिवर्धनम् ॥ ३४
शमस्य मुनिश्रेष्ठाः कीर्त्यमानं निबोधत । धन्यमायुष्यमारोग्यं पुण्यं संकल्पसाधनम् ॥ ३५
सोमस्य जन्म श्रुत्वैव पापेभ्यो विप्रमुच्यते ॥ ३६

इति श्रीमहापुराणे ब्राह्मे सोमोत्पत्तिकथनं नाम नवमोऽध्यायः ॥ ९ ॥

श्लोकानामादितः समष्ट्यङ्काः—७१६

---

अथ दशमोऽध्यायः ।

---

लोमहर्षण उवाच—

बुधस्य तु मुनिश्रेष्ठा विद्वान्पुत्रः पुरूरवाः । तेजस्वी दानशीलश्च यज्वा विपुलदक्षिणः ॥ १

---

* एतदादिश्लोकद्वयं क. ग. पुस्तकयोर्नास्ति । + एतदर्धं ख. पुस्तके नास्ति । † अयं श्लोकः ख. ग. पुस्तकयोर्नास्ति ।

---

१ ग. तदा । २ क. ग. °र्षिभिः सह । नै° । ३ ख. तस्यैवाङ्गिरसस्तदा । ४ ख. °ष्टं तेषां नाशाय शंभुना । त° । ५ क. ख. मुनिसत्तमाः । ६ क. ग. °जा प्रजापतिः । बु° । ७ ख. °त्रिकः । त° ।

ब्रह्मवादी पराक्रान्तः शत्रुभिर्युधि दुर्दमः । आहर्ता चाग्निहोत्रस्य यज्ञानां च महीपतिः ॥ २
सत्यवादी पुण्यमतिः सम्यक्संवृतमैथुनः । अतीव त्रिषु लोकेषु यशसाऽप्रतिमैः सदा ॥ ३
तं ब्रह्मवादिनं शान्तं धर्मज्ञं सत्यवादिनम् । उर्वशी वरयामास हित्वा मानं यशस्विनी ॥ ४
तया सहावसद्राजा दश वर्षाणि पञ्च च । षट्पञ्च सप्त चाष्टौ च दश चाष्टौ च भो द्विजाः ॥ ५
वने चैत्ररथे रम्ये तथा मन्दाकिनीतटे । अलकायां विशालायां नन्दने च वनोत्तमे ॥ ६
उत्तरान्स कुरून्प्राप्य मनोरमफलद्रुमान् । गन्धमादनपादेषु मेरुशृङ्गे तथोत्तरे ॥ ७
एतेषु वनमुख्येषु सुरैराचरितेषु च । उर्वश्या सहितो राजा रेमे परमया मुदा ॥ ८
देशे पुण्यतमे चैव महर्षिभिरभिष्टुते । राज्यं स कारयामास प्रयागे पृथिवीपतिः ॥ ९
एवंप्रभावो राजाऽऽसीदैलस्तु नरसत्तमः । [*उत्तरे जाह्नवीतीरे प्रतिष्ठाने महायशाः] ॥ १०

लोमहर्षण उवाच—

ऐलपुत्रा बभूवुस्ते सप्त देवसुतोपमाः । गन्धर्वलोके विदिता आयुर्धीमानमावसुः ॥ ११
विश्वायुश्चैव धर्मात्मा श्रुतायुश्च तथाऽपरः । दृढायुश्च वनायुश्च बह्वायुश्चोर्वशीसुताः ॥ १२
अमावसोस्तु दायादो भीमो राजाऽथ राजराट् । श्रीमान्भीमस्य दायादो राजाऽऽसीत्काञ्चनप्रभः ॥ १३
विद्वांस्तु काञ्चनस्यापि सुहोत्रोऽभून्महाबलः । सुहोत्रस्याभवज्जह्नुः केशिन्या गर्भसंभवः ॥ १४
आजह्रे यो महत्सत्रं सर्पमेधं महामखम् । पतिलोभेन यं गङ्गा पतित्वेन ससार ह ॥ १५
नेच्छतः प्लावयामास तस्य गङ्गा तदा सदः । स तया प्लावितं दृष्ट्वा यज्ञवाटं समन्ततः ॥ १६
सौहोत्रिरशपद्गङ्गां क्रुद्धो राजा द्विजोत्तमाः । एष ते विफलं यत्नं पिबन्नम्भः करोम्यहम् ॥ १७
अस्य गङ्गेऽवलेपस्य सद्यः फलमवाप्नुहि । जह्नुराजर्षिणा पीतां गङ्गां दृष्ट्वा महर्षयः ॥ १८
उपनिन्युर्महाभागां दुहितृत्वेन जाह्नवीम् । युवनाश्वस्य पुत्रीं तु कावेरीं जह्नुरावहत् ॥ १९
युवनाश्वस्य शापेन गङ्गार्धेन विनिर्गता । कावेरीं सरितां श्रेष्ठां जह्नोर्भार्यामनिन्दिताम् ॥ २०
जह्नुस्तु दयितं पुत्रं सुनद्यं नाम धार्मिकम् । कावेर्यां जनयामास अजकस्तस्य चाऽऽत्मजः ॥ २१
अजकस्य तु दायादो बलाकाश्वो महीपतिः । बभूव मृगयाशीलः कुशस्तस्याऽऽत्मजोऽभवत् ॥ २२
कुशपुत्रा बभूवुर्हि चत्वारो देववर्चसः । कुशिकः कुशनाभश्च कुशाम्बो मूर्तिमांस्तथा ॥ २३
बल्लवैः सह संवृद्धो राजा वनचरः सदा । कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमं प्रभुः ॥ २४

* एतच्चिह्नान्तर्गतः पाठः ख. पुस्तके न ।

१ ख. शत्रूणां युधि दुर्जयः । २ ख. सुभक्त्या । ३ क. °ग्न्यामिभृत° । ४ क. °तिमो युधि । तं । ५ ख. °दा । विश्वं हि ब्रह्मस्ततस्य कर्मापि विलयं गतम् । उर्वशीं व° । ६ ख. °नीम् । त° । ७ ख. वाऽष्टौ । ८ ख. वाऽष्टौ । ९ क. देशे । ख. तदा । १० ग. °रथफ° । ११ क. °रुपृष्ठान्तरेषु च । ए° । १२ ख. °स्ते स्मरदे° । १३ क. सर्वे । १४ ख. °माः । दिवि जाता महात्मान आ° । १५ ख. °मान्विभाव° । १६ क. °र्मायुरनायु° । १७ क. °श्च सर्वे चैवोर्व° । ख. °श्च मुतायु° । १८ क °जा स रा° । ख. °जाऽधिरा° । १९ ग. °प्रभुः । वि° । २० ख. °वत्पुत्रो जह्नुर्वै नाम नामतः । आ° । २१ ख. °त्रं पूर्वमेव म° । २२ ग. °ङ्गा च तत्सदः । २३ क. °रवदद्° । २४ क. ते त्रिषु लोकेषु संक्षिप्यापः पिबाम्य° । २५ ग. जन्म । २६ ख. °ङ्गेऽनयस्यापि स° । २७ क. ख. °भागा दु° । २८ क. °त् । गङ्गाशापेन देहार्धं नदीं पश्चाद्विनिर्ममे । का° । २९ ग. °निर्मिते । का° । ३० क. महान्तं । ३१ क. अञ्जक° । ३२ क. अञ्जक° । ३३ ख. °शाश्वान्मूर्ति° । ग. °शाश्वो मू° । ३४ ख. °धा । पह्लवैः स निराक्रामद्राजा । ३५ ख. प्रभुम् ।

[प्रिय]यमिति तं शक्रस्त्रासादभ्येत्य जज्ञिवान् । पूर्णे वर्षसहस्रे वै ततः शक्रो ह्यपश्यत ॥ २५
[उ]ग्रुग्रतपसं दृष्ट्वा सहस्राक्षः पुरंदरः । समर्थः पुत्रजनने स्वयमेवास्य शाश्वतः ॥ २६
[पुत्रा]र्थं कल्पयामास देवेन्द्रः सुरसत्तमः । स गाधिरभवद्राजा मघवान्कौशिकः स्वयम् ॥ २७
[पौ]रा यस्याभवद्भार्या गाधिस्तस्यामजायत । गाधेः कन्या महाभागा नाम्ना सत्यवती शुभा २८
[तां] गाधिः काव्यपुत्राय ऋचीकाय ददौ प्रभुः । तस्याः प्रीतः स वै भर्ता भार्गवो भृगुनन्दनः ॥
[पुत्रा]र्थं साधयामास चरुं गाधेस्तथैव च । उवाचाऽऽहूय तां भार्यामृचीको भार्गवस्तदा ॥ ३०
[उपयो]ज्यश्चरुरयं त्वया मात्रा स्वयं शुभे । तस्यां जनिष्यते पुत्रो दीप्तिमान्क्षत्रियर्षभः ॥ ३१
[अ]जेयः क्षत्रियैर्लोके क्षत्रियर्षभसूदनः । तवापि पुत्रं कल्याणि धृतिमन्तं तपोधनम् ॥ ३२
[शमा]त्मकं द्विजश्रेष्ठं चरुरेष विधास्यति । एवमुक्त्वा तु तां भार्यामृचीको भृगुनन्दनः ॥ ३३
[तप]स्यभिरतो नित्यमरण्यं प्रविवेश ह । गाधिः सदारस्तु तदा ऋचीकाश्रममभ्ययात् ॥ ३४
[तीर्]थयात्राप्रसङ्गेन सुतां द्रष्टुं नरेश्वरः । चरुद्वयं गृहीत्वा सा ऋषेः सत्यवती तदा ॥ ३५
[चरु]मादाय यत्नेन सा तु मात्रे न्यवेदयत् । माता तु तस्या दैवेन दुहित्रे स्वं चरुं ददौ ॥ ३६
[तस्]याश्चरुमथाज्ञानादात्मसंस्थं चकार ह । अथ सत्यवती सर्वं क्षत्रियान्तकरं तदा ॥ ३७
[धा]रयामास दीप्तेन वपुषा घोरदर्शना । तामृचीकस्ततो दृष्ट्वा योगेनाभ्युपसृत्य च ॥ ३८
[तत]ोऽब्रवीद्द्विजश्रेष्ठः स्वां भार्यां वरवर्णिनीम् । मात्राऽसि वञ्चिता भद्रे चरुव्यत्यासहेतुना॥ ३९
[ज]निष्यति हि पुत्रस्ते क्रूरकर्माऽतिदारुणः । भ्राता जनिष्यते चापि ब्रह्मभूतस्तपोधनः ॥ ४०
[वि]श्वं हि ब्रह्म तपसा मया तस्मिन्समर्पितम् । एवमुक्ता महाभागा भर्त्रा सत्यवती तदा ॥ ४१
[प्रस]ादयामास पतिं पुत्रो मे नेदृशो भवेत् । ब्राह्मणापसदस्त्वत्त इत्युक्तो मुनिरब्रवीत् ॥ ४२

ऋचीक उवाच—

[नै]ष संकल्पितः कामो मया भद्रे तथाऽस्त्विति । उग्रकर्मा भवेत्पुत्रः पितुर्मातुश्च कारणात् ॥ ४३
[पु]नः सत्यवती वाक्यमेवमुक्त्वाऽब्रवीदिदम् । इच्छँल्लोकानपि मुने सृजेथाः किं पुनः सुतम् ४४
[श]मात्मकमृजुं त्वं मे पुत्रं दातुमिहार्हसि । काममेवंविधः पौत्रो मम स्यात्तव च प्रभो ॥ ४५
[य]द्यन्यथा न शक्यं वै कर्तुमेतद्द्विजोत्तम । ततः प्रसादमकरोत्स तस्यास्तपसो बलात् ॥ ४६
[पु]त्रे नास्ति विशेषो मे पौत्रे वा वरवर्णिनि । त्वया यथोक्तं वचनं तथा भद्रे भविष्यति ॥ ४७
[त]तः सत्यवती पुत्रं जनयामास भार्गवम् । तपस्यभिरतं दान्तं जमदग्निं समात्मकम् ॥ ४८
[भृ]गोर्जगत्यां वंशेऽस्मिञ्जमदग्निरजायत । सा हि सत्यवती पुण्या सत्यधर्मपरायणा ॥ ४९
[क]ौशिकीति समाख्याता प्रवृत्तेयं महानदी । इक्ष्वाकुवंशप्रभवो रेणुर्नाम नराधिपः ॥ ५०
[त]स्य कन्या महाभागा कामली नाम रेणुका । रेणुकायां तु कामल्यां तपोविद्यासमन्वितः ॥५१
[आ]र्चीको जनयामास जामदग्न्यं सुदारुणम् । सर्वविद्यान्तगं श्रेष्ठं धनुर्वेदस्य पारगम् ॥ ५२

* एतदर्धं ग. पुस्तके नास्ति ।

१ ख. पूर्णैर्वर्षसहस्रैस्तु त° । २ क. पौरकुत्साऽभ° । ३ ख. °भ्ययात् । ४ क. चरुं विप्रा गृहीतं तमृषेः । ५ क. °दा । विपर्ययात्तदा तं वै सा । ६ क. ख. तदभेदेन । ७ क. °ज्ञात्वा आत्म° । ८ ख. हि तपसा ब्रह्म म° । ९ क. °त् । न स सं° । १० ग. पुत्रो । ११ क. ख. भद्रे । १२ क. °गोश्चरुविपर्यासे जम° । ग. °गोश्चरुविपर्यासे रौद्रवैष्णवयोः पुरा यजनाद्वैष्णवे चांशे जम° । १३ क. ख. °द्यानुगश्रे° ।

रामं क्षत्रियहन्तारं प्रदीप्तमिव पावकम् । और्वस्यैवं(?)मृचीकस्य सत्यवत्यां महायशाः ॥ ५३
जमदग्निस्तपोवीर्याज्जज्ञे ब्रह्मविदां वरः । मध्यमश्च शुनःशेफः शुनःपुच्छः कनिष्ठकः ॥ ५४
विश्वामित्रं तु दायादं गाधिः कुशिकनन्दनः । जनयामास पुत्रं तु तपोविद्याशमात्मकम् ॥ ५५
प्राप्य ब्रह्मर्षिसमतां योऽयं ब्रह्मर्षितां गतः । विश्वामित्रस्तु धर्मात्मा नाम्ना विश्वरथः स्मृतः ५६
जज्ञे भृगुप्रसादेन कौशिकाद्वंशवर्धनः । विश्वामित्रस्य च सुता देवरातादयः स्मृताः ॥ ५७
प्रख्यातास्त्रिषु लोकेषु तेषां नामान्यतःपरम् । देवरातः कतिश्चैव यस्मात्कात्यायनाः स्मृताः ५८
शालावत्यां हिरण्याक्षो रेणुर्जज्ञेऽथ रेणुकः । सांकृतिर्गालवश्चैवं मुद्गलश्चैव विश्रुतः ॥ ५९
मधुच्छन्दो जयश्चैव देवलश्च तथाऽष्टकः । कच्छपो हारितश्चैव विश्वामित्रस्य ते सुताः ॥ ६०
तेषां ख्यातानि गोत्राणि कौशिकानां महात्मनाम् । पाणिनो बभ्रवश्चैव ध्यानजप्यास्तथैव च ॥
पार्थिवा देवराताश्च शालङ्कायनबाष्कलाः । लोहिता यमदूताश्च तथा कारूषकाः स्मृताः* ॥६२
पौरवस्य मुनिश्रेष्ठा ब्रह्मर्षेः कौशिकस्य च । संबन्धोऽप्यस्य वंशेऽस्मिन्ब्रह्मक्षत्रस्य विश्रुतः ॥६३
विश्वामित्रात्मजानां तु शुनःशेफोऽग्रजः स्मृतः । भार्गवः कौशिकत्वं हि प्राप्तः स मुनिसत्तमः ।
विश्वामित्रस्य पुत्रस्तु शुनःशेफोऽभवत्किल । हरिदश्वस्य यज्ञे तु पशुत्वे विनियोजितः ॥ ६५
देवैर्दत्तः शुनःशेफो विश्वामित्राय वै पुनः । देवैर्दत्तः स वै यस्माद्देवरातस्ततोऽभवत् ॥ ६६
देवरातादयः सप्त विश्वामित्रस्य वै सुताः । दृषद्वतीसुतश्चापि वैश्वामित्रस्तथाऽष्टकः ॥ ६७
अष्टकस्य सुतो लौहिः प्रोक्तो जह्नुगणो मया । अत ऊर्ध्वं प्रवक्ष्यामि वंशमायोर्महात्मनः ॥६८

इति श्रीमहापुराणे आदिब्राह्मे सोमवंशेऽमावसुवंशानुकीर्तनं नाम दशमोऽध्यायः ॥ १० ॥

आदितः श्लोकानां समष्ट्यङ्काः—७८४

---

अथैकादशोऽध्यायः ।

---

लोमहर्षण उवाच—

आयोः पुत्राश्च ते पञ्च सर्वे वीरा महारथाः । स्वर्भानुतनयायां च प्रभायां जज्ञिरे नृपाः ॥ १
नहुषः प्रथमं जज्ञे वृद्धशर्मा ततः परम् । रम्भो रजिरनेनाश्च त्रिषु लोकेषु विश्रुताः ॥ २
रजिः पुत्रशतानीह जनयामास पञ्च वै । राजेयमिति विख्यातं क्षत्रमिन्द्रभयावहम् ॥ ३
यत्र देवासुरे युद्धे समुत्पन्ने सुदारुणे । देवाश्चैवासुराश्चैव पितामहमथाब्रुवन् ॥ ४

देवासुरा ऊचुः—

आवयोर्भगवन्युद्धे को विजेता भविष्यति । ब्रूहि नः सर्वभूतेश श्रोतुमिच्छाम तत्त्वतः ॥ ५

---

* इतः परं श्लोकत्रयमधिकं ग.पुस्तके—"सैन्धवाः कौशिकाश्चैव तथाऽन्ये सैन्धवायनाः । देवला रेणवश्चैव याज्ञवल्क्याघ मर्षणः । औदुम्बराम्बुभिष्णावारतारकायणचुचुलाः । शालवत्या हिरण्याक्षाः सांकृत्या गालवास्तथा । नारायणिनेरश्चान्यो विश्वामित्रस्य धीमतः । ऋष्यन्तरविरान्ताश्च कौशिका बहवः स्मृताः" इति ।

---

१ ख. °व ऋची° । २ ख. °द्यासमान्वितम् । ३ क. ख. °व दे° । ४ क. तेषामाख्यामि गो° । ५ क. °तायनहा° तावष्टकाधाजनाः स्मृ° । ६ ग. यामभूताश्च । ७ ग. कारिकयः । ८ क. °पि विश्वामित्रादथाष्ट° । ९ क. ख. लोहिः १० क. त्रिप्रा ।

ब्रह्मोवाच—

षामर्थाय सङ्ग्रामे रजिरात्तायुधः प्रभुः । योत्स्यते ते विजेष्यन्ति त्रीँल्लोकान्नात्र संशयः ॥ ६
तो रजिर्धृतिस्तत्र श्रीश्च तत्र यतो धृतिः । यतो धृतिश्च श्रीश्चैव धर्मस्तत्र जयस्तथा ॥ ७
देवा दानवाः प्रीता देवेनोक्ता रजिं तदा । अभ्ययुर्जयमिच्छन्तो वृण्वानास्तं नरर्षभम् ॥ ८
हि स्वर्भानुदौहित्रः प्रभायां समपद्यत । राजा परमतेजस्वी सोमवंशविवर्धनः ॥ ९
हृष्टमनसः सर्वे रजिं वै देवदानवाः । ऊचुरस्मज्जयाय त्वं गृहाण वरकार्मुकम् ॥ १०
थोवाच रजिस्तत्र तयोर्वै देवदैत्ययोः । अर्थज्ञः स्वार्थमुद्दिश्य यशः स्वं च प्रकाशयन् ॥ ११

रजिरुवाच—

ादि दैत्यगणान्सर्वाञ्जित्वा[1] वीर्येण वासवः(व) । इन्द्रो भवामि धर्मेण ततो योत्स्यामि संयुगे ॥
ःवाः प्रथमतो विप्राः प्रतीयुर्हृष्टमानसाः । एवं यथेष्टं नृपते कामः संपद्यतां तव ॥ १३
ृत्वा सुरगणानां तु वाक्यं राजा रजिस्तदा । पप्रच्छासुरमुख्यांस्तु यथा देवानपृच्छत ॥ १४
ानवा दर्पसंपूर्णाः स्वार्थमेवावगम्य ह । प्रत्यूचुस्तं नृपवरं साभिमानमिदं वचः ॥ १५

दानवा ऊचुः—

अस्माकमिन्द्रः प्रह्रादो यस्यार्थे विजयामहे । अस्मिंस्तु समरे राजंस्तिष्ठ त्वं राजसत्तम ॥ १६
स तथेति ब्रुवन्नेव देवैरप्यतिचोदितः । भविष्यसीन्द्रो जित्वैनं देवैरुक्तस्तु पार्थिवः ॥ १७
जघान दानवान्सर्वान्येऽवध्या वज्रपाणिनः । स विप्रनष्टां देवानां परमश्रीः श्रियं वशी ॥ १८
निहत्य दानवान्सर्वानाजहार रजिः प्रभुः । ततो रजिं महावीर्यं देवैः सह शतक्रतुः ॥ १९
रजिपुत्रोऽहमित्युक्त्वा पुनरेवाब्रवीद्वचः । इन्द्रोऽसि तात देवानां सर्वेषां नात्र संशयः ॥ २०
यस्याहमिन्द्रः पुत्रस्ते ख्यातिं यास्यामि कर्मभिः । स तु शक्रवचः श्रुत्वा वञ्चितस्तेन मायया ॥
तथेत्यब्रवीद्राजा प्रीयमाणः शतक्रतुम् । तस्मिंस्तु देवैः सदृशे दिवं प्राप्ते महीपतौ ॥ २२
दायाद्यमिन्द्रादाजह्रू राज्यं तत्तनया रजेः । पञ्च पुत्रशतान्यस्य तद्वै स्थानं शतक्रतोः ॥ २३
समाक्रामन्त बहुधा स्वर्गलोकं त्रिविष्टपम् । ते यदा तु स्वसंमूढा रागोन्मत्ता विधर्मिणः ॥ २४
ब्रह्मद्विषश्च संवृत्ता हतवीर्यपराक्रमाः । ततो लेभे स्वमैश्वर्यमिन्द्रः स्थानं तथोत्तमम् ॥ २५
हत्वा रजिसुतान्सर्वान्कामक्रोधपरायणान् । य इदं च्यावनं स्थानात्प्रतिष्ठानं शतक्रतोः ॥
शृणुयाद्धारयेद्वाऽपि न स दौर्गत्यमाप्नुयात् ॥ २६

लोमहर्षण उवाच—

रम्भोऽनपत्यस्त्वासीच्च[2] वंशं वक्ष्याम्यनेनसः । अनेनसः सुतो राजा प्रतिक्षत्रो[3] महायशाः ॥२७
ातिक्षत्रसुतश्चाऽऽसीत्संजयो[4] नाम विश्रुतः । संजयस्य जयः पुत्रो विजयस्तस्य चाऽऽत्मजः २८
वेजयस्य कृतिः पुत्रस्तस्य हर्यत्वतः सुतः । हर्यत्वतसुतो राजा सहदेवः प्रतापवान् ॥ ॥ २९
सहदेवस्य धर्मात्मा नदीन[10] इति विश्रुतः । नदीनस्य[11] जयत्सेनो जयत्सेनस्य संकृतिः[12] ॥ ३०
संकृतेरपि[13] धर्मात्मा क्षेत्रवृद्धो[14] महायशाः । अनेनसः समाख्याताः क्षत्रवृद्धस्य चापरः ॥ ३१

१ ख. र्वान्क्षिप्त्वा वी॰ । २ क. तावदेना॰ । ३ ख. सुसंपुष्टा । ४ ग. प्रतिक्षेत्रो । ५ ग. ॰तिक्षेत्रसु॰ । ६ क. ख. ॰सीत्सृञ्जयो॰ । ७ क. ख. ॰तः । सृञ्जय॰ । ८ क. हर्यश्वनः । ख. हर्यश्वनः । ९ क. ॰र्यश्वनसु॰ । ख. ॰र्यश्वनसु॰ । १० ग. नदीज । ११ क. ॰दीजस्य । १२ ग. संहातिः । १३ ग. संहते॰ । १४ ख. कृतवर्मा ।

५

क्षत्रवृद्धात्मजस्तत्र सुनहोत्रो महायशाः । सुनहोत्रस्य दायादास्त्रयः परमधार्मिकाः ॥ ३१
काशः शलश्च द्वावेतौ तथा गृत्समदः प्रभुः । पुत्रो गृत्समदस्यापि शुनको यस्य शौनकः ॥ ३२
ब्राह्मणाः क्षत्रियाश्चैव वैश्याः शूद्रास्तथैव च । शलात्मज आर्ष्टिसेनस्तनयस्तस्य काश्यपः ॥ ३३
काशस्य काशिपो राजा पुत्रो दीर्घतपास्तथा । धैनुस्तु दीर्घतपसो विद्वान्धन्वन्तरिस्ततः ॥ ३४
तपसोऽन्ते सुमहतो जातो वृद्धस्य धीमतः । पुनर्धन्वन्तरिर्देवो मानुषेष्विह जन्मनि ॥ ३५
तस्य गेहे समुत्पन्नो देवो धन्वन्तरिस्तदा । काशिराजो महाराजः सर्वरोगप्रणाशनः ॥ ३६
आयुर्वेदं भरद्वाजात्प्राप्येह स भिषक्क्रियः । तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत् ॥ ३७
धन्वन्तरेस्तु तनयः केतुमानिति विश्रुतः । अथ केतुमतः पुत्रो वीरो भीमरथः स्मृतः ॥ ३८
पुत्रो भीमरथस्यापि दिवोदासः प्रजेश्वरः । दिवोदासस्तु धर्मात्मा वाराणस्यधिपोऽभवत् ॥ ४०
एतस्मिन्नेव काले तु पुरीं वाराणसीं द्विजाः । शून्यां निवेशयामास क्षेमको नाम राक्षसः ॥ ४१
शप्ता हि सा मतिमता निकुम्भेन महात्मना । शून्या वर्षसहस्रं वै भवित्री तु न संशयः ॥ ४२
तस्यां हि शप्तमात्रायां दिवोदासः प्रजेश्वरः । विषयान्ते पुरीं रम्यां गोमत्यां संन्यवेशयत् ४३
*भद्रश्रेण्यस्य पूर्वं तु पुरी वाराणसी अभूत् । भद्रश्रेण्यस्य पुत्राणां शतमुत्तमधन्विनाम् ॥ ४४
हत्वा निवेशयामास दिवोदासो नराधिपः । भद्रश्रेण्यस्य तद्राज्यं हृतं येन बलीयसा ॥ ४५
भद्रश्रेण्यस्य पुत्रस्तु दुर्दमो नाम विश्रुतः । दिवोदासेन बालेति घृणया स विसर्जितः ॥ ४६
हैहयस्य तु दायाद्यं हृतवान्वै महीपतिः । आजह्रे पितृदायाद्यं दिवोदासहृतं बलात् ॥ ४७
भद्रश्रेण्यस्य पुत्रेण दुर्दमेन महात्मना । वैरस्यान्तो महाभागाः कृतश्चाऽऽत्मीयतेजसा ॥ ४८
दिवोदासाद्दृषद्वत्यां वीरो जज्ञे प्रतर्दनः । तेन बालेन पुत्रेण प्रहृतं तु पुनर्बलम् ॥ ४९
प्रतर्दनस्य पुत्रौ द्वौ वत्सभर्गौ सुविश्रुतौ । वत्सपुत्रो ह्यलर्कस्तु संनतिस्तस्य चाऽऽत्मजः ॥ ५०
अलर्कस्तस्य पुत्रस्तु ब्रह्मण्यः सत्यसंगरः । अलर्कं प्रति राजर्षिं श्लोको गीतः पुरातनैः ॥ ५१
षष्टिर्वर्षसहस्राणि षष्टिर्वर्षशतानि च । युवा रूपेण संपन्नः प्रागासीच्च कुलोद्वहः ॥ ५२
लोपामुद्राप्रसादेन परमायुरवाप्तवान् । तस्याऽऽसीत्सुमहद्राज्यं रूपयौवनशालिनः ॥ ५३
शापस्यान्ते महाबाहुर्हत्वा क्षेमकराक्षसम् । रम्यां निवेशयामास पुरीं वाराणसीं पुनः ॥ ५४
संनतेरपि दायादः सुनीथो नाम धार्मिकः । सुनीथस्य तु दायादः क्षेमो नाम महायशाः ॥ ५५
क्षेमस्य केतुमान्पुत्रः सुकेतुस्तस्य चाऽऽत्मजः । सुकेतोस्तनयश्चापि धर्मकेतुरिति स्मृतः ॥ ५६
धर्मकेतोस्तु दायादः सत्यकेतुर्महारथः । सत्यकेतुसुतश्चापि विभुर्नाम प्रजेश्वरः ॥ ५७
आनर्तस्तु विभोः पुत्रः सुकुमारश्च तत्सुतः । सुकुमारस्य पुत्रस्तु धृष्टकेतुः सुधार्मिकः ॥ ५८
धृष्टकेतोस्तु दायादो वेणुहोत्रः प्रजेश्वरः । वेणुहोत्रसुतश्चापि भार्गो नाम प्रजेश्वरः ॥ ५९
वत्सस्य वत्सभूमिस्तु भार्गभूमिस्तु भार्गजः । एते त्वङ्गिरसः पुत्रा जाता वंशेऽथ भार्गव ॥ ६०

---

* इदमर्धं क. ख. पुस्तकयोर्नास्ति ।

---

१ ग. °त्मजः पार्ष्णिमे° । २ ग. °तमास्त° । ३ ख. धन्वस्तु । ४ ग. °तमसो । ५ ग. मणिराजो । ६ क. °न्नो सुतो नमः के° । ७ ग. °यादान्कृत° । ८ क. °त्सगौरौ मु° । ९ ख. °तौ । शत्रुजिद्वत्सपुत्रोऽथ तस्य पुत्र ऋतध्वजः । अ° १० ग. °रः । स्वत्रिभुस्तु । ११ ख. भर्गो । १२ ख. °र्तु भर्ग° । १३ क. °भूतिस्तु । १४ ग. भार्गवात् ।

ाह्मणाः क्षत्रिया वैश्यास्त्रयः पुत्राः सहस्रशः । इत्येते काश्यपाः प्रोक्ता नहुषस्य निबोधत ६१

इति श्रीमहापुराणे ब्राह्मे सोमवंशे वृद्धक्षत्रप्रसूतिनिरूपणं नामैकादशोऽध्यायः ॥ ११ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८४९

---




अथ द्वादशोऽध्यायः ।

---

लोमहर्षण उवाच—

ुत्पन्नाः पितृकन्यायां विरजायां महौजसः । नहुषस्य तु दायादाः षडिन्द्रोपमतेजसः ॥ १
ातिर्ययातिः संयातिरायातिः पार्श्वकोऽभवत् । यतिर्ज्येष्ठस्तु तेषां वै ययातिस्तु ततः परम् ॥ २
ककुत्स्थकन्यां गां नाम लेभे परमधार्मिकः । यतिस्तु मोक्षमास्थाय ब्रह्मभूतोऽभवन्मुनिः ॥ ३
ोषां ययातिः पञ्चानां विजित्य वसुधामिमाम् । देवयानीमुशनसः सुतां भार्यामवाप सः ॥ ४
ार्मिष्ठामासुरीं चैव तनयां वृषपर्वणः । यदुं च तुर्वसुं चैव देवयानी व्यजायत ॥ ५
ुह्यं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी । तस्मै शक्रो ददौ प्रीतो रथं परमभास्वरम् ॥ ६
ासङ्गं काञ्चनं दिव्यं दिव्यैः परमवाजिभिः । युक्तं मनोजवैः शुभ्रैर्येन कार्यं समुद्वहन् ॥ ७
ा तेन रथमुख्येन षड्रात्रेणाजयन्महीम् । ययातिर्युधि दुर्धर्षस्तथा देवान्सदानवान् ॥ ८
रथः कौरवाणां तु सर्वेषामभवत्तदा । संवर्तवसुनाम्नस्तु कौरवाज्जनमेजयात् ॥ ९
ुरोः पुत्रस्य राजेन्द्रराज्ञः पारीक्षितस्य(?) ह । जगाम स रथो नाशं शापाद्गर्गस्य धीमतः ॥ १०
र्गस्य हि सुतं बालं स राजा जनमेजयः । कालेन हिंसयामास ब्रह्महत्यामवाप सः ॥ ११
लोहगन्धी राजर्षिः परिधावन्नितस्ततः । पौरजानपदैस्त्यक्तो न लेभे शर्म कर्हिचित् ॥ १२
तः स दुःखसंतप्तो नालभत्संविदं क्वचित् । विप्रेन्द्रं शौनकं राजा शरणं प्रत्यपद्यत ॥ १३
ाजयामास च ज्ञानी शौनको जनमेजयम् । अश्वमेधेन राजानं पावनार्थं द्विजोत्तमाः ॥ १४
लोहगन्धो व्यनशत्तस्यावभृथमेत्य ह । स च दिव्यरथो राज्ञो वंशश्चेदिपतेस्तदा ॥ १५
तः शक्रेण तुष्टेन लेभे तस्माद्बृहद्रथः । बृहद्रथात्क्रमेणैव गतो बार्हद्रथं नृपम् ॥ १६
ो हत्वा जरासन्धं भीमस्तं रथमुत्तमम् । प्रददौ वासुदेवाय प्रीत्या कौरवनन्दनः ॥ १७
प्तद्वीपां ययातिस्तु जित्वा पृथ्वीं ससागराम् । विभज्य पञ्चधा राज्यं पुत्राणां नाहुषस्तदा ॥ १८
ातिर्दिशि पूर्वस्यां यदुं ज्येष्ठं न्ययोजयत् । मध्ये पूरुं च राजानमभ्यषिञ्चत्स नाहुषः ॥ १९
शि दक्षिणपूर्वस्यां तुर्वसुं मतिमान्नृपः । तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ॥ २०
ाप्रदेशमद्यापि धर्मेण प्रतिपाल्यते । प्रजास्तेषां पुरस्तात्तु वक्ष्यामि मुनिसत्तमाः ॥ २१

---

१ क. °श्या भार्गोः पुत्राः । २ ख. °न्द्रोपेन्द्रते° । ३ ख. °यातिर्यातिरेव च । सुयातिः पञ्चस्तेषां वै ययातिः पार्थिभवत् । य° । ४ क. ग. पूरुं । ५ ख. °म् । सशक्रास्त्रं का° । ६ ख. °नं च दिव्यैः । ७ ग. मनोरमैः । ८ ख. °न दिग्गज° । ९ ख. °तिर्नेकस्ताह्यासीत्° । १० क. ग. पौरवाणां । ११ ख. °स्य विप्रेन्द्र° । १२ ख. चाक्रूरं । ग. वाक्रूरं । ख. सः । दुर्गन्धयुक्तो रा° । १४ क. होतारं । ग. इन्द्रोतं । १५ क. °स चेन्द्रेण शौं° । १६ क. वसोर्थे° । १७ ख. °स्तं तदा रा° । १८ ग. पूरुं ।

धनुर्न्यस्य पृषत्कांश्च पञ्चभिः पुरुषर्षभैः । जरावानभवद्राजा भारमावेश्य बन्धुषु ॥ २
निक्षिप्तशस्त्रः पृथिवीं चचार पृथिवीपतिः । प्रीतिमानभवद्राजा ययातिरपराजितः ॥ २
एवं विभज्य पृथिवीं ययातिर्यदुमब्रवीत् । जरां मे प्रतिगृह्णीष्व पुत्र कृत्यान्तरेण वै ॥ २
तरुणस्तव रूपेण चरेयं पृथिवीमिमाम् । जरां त्वयि समाधाय तं यदुः प्रत्युवाच ह ॥ २

यदुरुवाच—

अनिर्दिष्टा मया भिक्षा ब्राह्मणस्य प्रतिश्रुता । अनपाकृत्य तां राजन्न ग्रहीष्यामि ते जराम् २
जरायां बहवो दोषाः पानभोजनकारिताः । तस्माज्जरां न ते राजन्ग्रहीतुमहमुत्सहे ॥ २
सन्ति ते बहवः पुत्रा मत्तः प्रियतरा नृप । प्रतिग्रहीतुं धर्मज्ञ पुत्रमन्यं वृणीष्व वै ॥ २८
स एवमुक्तो यदुना राजा कोपसमन्वितः । उवाच वदतां श्रेष्ठो ययातिर्गर्हयन्सुतम् ॥ २९

ययातिरुवाच—

क आश्रमस्तवान्योऽस्ति को वा धर्मो विधीयते । मामनादृत्य दुर्बुद्धे यदहं तव देशिकः ॥ ३०
एवमुक्त्वा यदुं विप्राः शशापैनं स मन्युमान् । अराज्या ते प्रजा मूढ भवित्रीति न संशयः ३१
द्रुह्युं च तुर्वसुं चैवाप्यनुं च द्विजसत्तमाः । एवमेवाब्रवीद्राजा प्रत्याख्यातश्च तैरपि ॥ ३२
शशाप तानतिक्रुद्धो ययातिरपराजितः । यथावत्कथितं सर्वं मयाऽस्य द्विजसत्तमाः ॥ ३३
एवं शप्त्वा सुतान्सर्वांश्चतुरः पुरुपूर्वजान् । तदेव वचनं राजा पुरुमप्याह भो द्विजाः ॥ ३४
तरुणस्तव रूपेण चरेयं पृथिवीमिमाम् । जरां त्वयि समाधाय त्वं पुरो यदि मन्यसे ॥ ३५
स जरां प्रतिजग्राह पितुः पुरुः प्रतापवान् । ययातिरपि रूपेण पुरोः पर्यचरन्महीम् ॥ ३६
स मार्गमाणः कामानामन्तं नृपतिसत्तमः । विश्वाच्या सहितो रेमे वने चैत्ररथे प्रभुः ॥ ३७
यदा च तृप्तः कामेषु भोगेषु च नराधिपः । तदा पुरोः सकाशाद्वै स्वां जरां प्रत्यपद्यत ॥ ३८
यत्र गाथा मुनिश्रेष्ठा गीताः किल ययातिना । याभिः प्रत्याहरेत्कामान्सर्वशोऽङ्गानि कूर्मवत् ३९
न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ४०
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वमिति कृत्वा न मुह्यति ॥ ४१
यदा भावं न कुरुते सर्वभूतेषु पापकम् । कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ४२
यदा तेभ्यो न बिभेति यदा चास्मान्न बिभ्यति । यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ४३
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः । योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम्
जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः । धनाशा जीविताशा च जीर्यतोऽपि न जीर्यति
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हन्ति षोडशीं कलाम् ॥ ४६
एवमुक्त्वा स राजर्षिः सदारः प्राविशद्वनम् । कालेन महता चीर्यं चचार विपुलं तपः ॥ ४७
भृगुतुङ्गे गतिं प्राप तपसोऽन्ते महायशाः । अनश्नन्देहमुत्सृज्य सदारः स्वर्गमाप्तवान् ॥ ४८
तस्य वंशे मुनिश्रेष्ठाः पञ्च राजर्षिसत्तमाः । यैर्व्याप्ता पृथिवी सर्वा सूर्यस्येव गभस्तिभिः ॥ ४९
यदोस्तु वंशं वक्ष्यामि शृणुध्वं राजसत्कृतम् । यत्र नारायणो जज्ञे हरिर्वृष्णिकुलोद्वहः ॥ ५०

---

१ ख. ग. नराधिप । २ ग. पुरुपूर्वजान् । ३ ख. °ह पुरुः पुरुप्र° । ४ ख. °माणस्तरुणीं सुमत्तो नृपस° । ५ क. ख. पूरोः । ६ ख. चापि । ग. वाऽपि । ७ ख. ग. °मे तपश्चीर्त्वा त° । ८ क. अनाशकं चरित्वा तु स° ।

ः प्रजावानायुष्मान्कीर्तिमांश्च भवेन्नरः । ययातिचरितं नित्यमिदं शृण्वन्द्विजोत्तमाः ॥ ५१

इति श्रीमहापुराणे ब्राह्मे सोमवंशे ययातिचरितनिरूपणं नाम द्वादशोऽध्यायः ॥ १२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८९६

---

अथ त्रयोदशोऽध्यायः ।

---

ब्राह्मणा ऊचुः—

पुरोर्वंशं वयं सूत श्रोतुमिच्छाम तत्त्वतः । द्रुह्यस्यानोर्यदोश्चैव तुर्वसोश्च पृथक्पृथक् ॥ १

लोमहर्षण उवाच—

शृणुध्वं मुनिशार्दूलाः पुरोर्वंशं महात्मनः । विस्तरेणाऽऽनुपूर्व्या च प्रथमं वदतो मम ॥ २
रोः पुत्रः सुवीरोऽभून्मनस्युस्तस्य चाऽऽत्मजः । राजा चाभयदो नाम मनस्योरभवत्सुतः ॥ ३
थैवाभयदस्याऽऽसीत्सुधन्वा नाम पार्थिवः । सुधन्वनः सुबाहुश्च रौद्राश्वस्तस्य चाऽऽत्मजः ॥ ४
द्राश्वस्य दशार्णेयुः कृकणेयुस्तथैव च । कक्षेयुस्थण्डिलेयुश्च संनतेयुस्तथैव च ॥ ५
ऋचेयुश्च जलेयुश्च स्थलेयुश्च महाबलः । धनेयुश्च वनेयुश्च पुत्रकाश्च दश स्त्रियः ॥ ६
भद्रा शूद्रा च मद्रा च शलदा मलदा तथा । खलदा[12] च ततो विप्रा नलदा[13] सुरसाऽपि च ॥ ७
तथा गोचपला च स्त्रीरत्नकूटा च ता दश । ऋषिर्जातोऽत्रिवंशे च तासां भर्ता प्रभाकरः ॥ ८
भद्रायां जनयामास सुतं सोमं यशस्विनम् । स्वर्भानुना हते सूर्ये पतमाने दिवो महीम् ॥ ९
तमोभिभूते लोके च प्रभा येन प्रवर्तिता । स्वस्ति तेऽस्त्विति चोक्त्वा वै पतमानो दिवाकरः १०
वचनात्तस्य विप्रर्षेर्न पपात दिवो महीम् । अत्रिश्रेष्ठानि गोत्राणि यश्चकार महातपाः ॥ ११
यज्ञेष्वत्रेर्बलं चैव देवैर्यस्य प्रतिष्ठितम् । स तासु जनयामास पुत्रिकास्वात्मकामजान् ॥ १२
दश पुत्रान्महासत्त्वांस्तपस्युग्रे रतांस्तथा । ते तु गोत्रकरा विप्रा ऋषयो वेदपारगाः ॥ १३
स्वस्त्यात्रेया इति ख्याताः किंच त्रिधनवर्जिताः । कक्षेयोस्तनयास्त्वासंस्त्रय एव महारथाः १४
सभानरश्चाक्षुपश्च परमन्युस्तथैव च । सभानरस्य पुत्रस्तु विद्वान्कालानलो नृपः ॥ १५
कालानलस्य धर्मज्ञः सृञ्जयो नाम वै सुतः । सृञ्जयस्याभवत्पुत्रो वीरो राजा पुरंजयः ॥ १६
जनमेजयो मुनिश्रेष्ठाः पुरंजयसुतोऽभवत् । जनमेजयस्य राजर्षेर्महाशालोऽभवत्सुतः ॥ १७
देवेषु स परिज्ञातः प्रतिष्ठितयशा भुवि । महामना नाम सुतो महाशालस्य विश्रुतः ॥ १८
जज्ञे वीरः सुरगणैः पूजितः सुमहामनाः । महामनास्तु पुत्रौ द्वौ जनयामास भो द्विजाः ॥ १९
उशीनरं च धर्मज्ञं तितिक्षुं च महाबलम् । उशीनरस्य पत्न्यस्तु पञ्च राजर्षिवंशजाः ॥ २०

---

* अयं श्लोकः ख. ग. पुस्तकयोर्नास्ति ।

---

१ ख. °नस्यस्त° । २ ख. °नस्यस्याभ° । ३ ख. °न्वा च महीपतिः । सु° । ४ ख. दशार्णायुः । ग. दशार्नेयुः । क. °कणायु° । ६ ख. सनुते° । ७ ख. महायशाः । ८ क. ग. वननित्यो । ९ क. धनेयुश्च । १० ग. रुद्रा । ११ ख. ग । शलावला त° । १२ क. रालदा । १३ क. ख. वरदा । १४ ग. रुद्रायां । १५ क. यज्ञे ह्यत्रेर्धनं चै° । १६ क. प्रजान्स्वकान् । १७ क. °था । पृथुगो° । १८ क. °याश्चाऽऽसंस्ते त्रयश्च म° । १९ ग. °मनुस्त° । २० ख. जन्मेज° । २१ क. °मनाः सुतो जज्ञे म° । २२ क. ख. धार्मिकः ।

नृगा कृमिर्नवा दर्वा[1] पञ्चमी च दृषद्वती । उशीनरस्य पुत्रास्तु पञ्च तासु कुलोद्वहाः ॥ २
तपसा चैव महता जाता वृद्धस्य चाऽऽत्मजाः । नृगायास्तु नृगः पुत्रः कृम्यां[2] कृमिरजायत २
नवायास्तु नवः पुत्रो दर्वायाः[3] सुव्रतोऽभवत् । दृषद्वत्यास्तु संजज्ञे शिबिरौशीनरो नृपः ॥ २
शिबेस्तु शिबयो विप्रा यौधेयास्तु नृगस्य ह[4] । नवस्य नवराष्ट्रं तु कृमेस्तु कृमिला[5] पुरी ॥
सुव्रतस्य तथा[6]ऽम्बष्ठाः शिबिपुत्रान्निबोधत । शिबेस्तु शिबयः पुत्राश्चत्वारो लोकविश्रुताः ॥ २५
वृषदर्भः[7] सुवीरश्च केकयो मद्रकस्तथा । तेषां जनपदाः स्फीता केकया मद्रकास्तथा ॥ २६
वृषदर्भाः[8] सुवीराश्च तितिक्षोस्तु प्रजास्त्विमाः[9] । तितिक्षुरभवद्राजा पूर्वस्यां दिशि भो द्विजाः २७
उषद्रथो महावीर्यैः[10] फेनस्तस्य सुतोऽभवत्[11] । फेनस्य सुतपा जज्ञे ततः सुतपसो बलिः[12] ॥ २८
जातो मानुषयोनौ तु स राजा काञ्चनेषुधिः । महायोगी स तु बलिर्बभूव नृपतिः पुरा ॥ २९
पुत्रानुत्पादयामास पञ्च वंशकरान्भुवि । अङ्गः प्रथमतो जज्ञे वङ्गः सुह्मस्तथैव च ॥ ३०
पुण्ड्रः कलिङ्गश्च तथा बालेयं[13] क्षत्रमुच्यते । बालेया ब्राह्मणाश्चैव तस्य वंशकरा भुवि ॥ ३१
बलेश्च ब्रह्मणा दत्तो वरः प्रीतेन भो द्विजाः । महायोगित्वमायुश्च कल्पस्य परिमाणतः ॥ ३२
बले[15] चाप्रतिमत्वं वै धर्मतत्त्वार्थदर्शनम् । सङ्ग्रामे चाप्यजेयत्वं धर्मे चैव प्रधानताम् ॥ ३३
त्रैलोक्यदर्शनं चापि प्राधान्यं[16] प्रसवे तथा । चतुरो नियतान्वर्णांस्त्वं च स्थापयितेति च ॥ ३४
इत्युक्तो विभुना राजा बलिः शान्तिं परां ययौ । कालेन महता विप्राः[17] स्वं च स्थानमुपागमत् ॥
तेषां जनपदाः पञ्च अङ्गा वङ्गाः[18] समुह्मकाः । कलिङ्गाः पुण्ड्रकाश्चैव प्रजास्त्वङ्गस्य सांप्रतम् ३६
अङ्गपुत्रो महानासीद्राजेन्द्रो दधिवाहनः । दधिवाहनपुत्रस्तु राजा दिविरथोऽभवत् ॥ ३७
पुत्रो दिविरथस्याऽऽसीच्छक्रतुल्यपराक्रमः । विद्वान्धर्मरथो[19] नाम तस्य चित्ररथः सुतः ॥ ३८
तेन धर्मरथेनाथ तदा कालंजरे गिरौ । यजता सह शक्रेण सोमः पीतो महात्मना ॥ ३९
अथ[21] चित्ररथस्यापि पुत्रो दशरथोऽभवत् । लोमपाद इति ख्यातो यस्य शान्ता सुताऽभवत् ४०
तस्य दाशरथिर्वीरश्चतुरङ्गो महायशाः । ऋष्यशृङ्गप्रसादेन जज्ञे वंशविवर्धनः ॥ ४१
चतुरङ्गस्य पुत्रस्तु पृथुलाक्ष इति स्मृतः । पृथुलाक्षसुतो राजा चम्पो नाम महायशाः ॥ ४२
चम्पस्य तु पुरी चम्पा या मालिन्यभवत्पुरा । पूर्णभद्रप्रसादेन हर्यङ्गो[22]ऽस्य सुतोऽभवत् ॥ ४३
ततो वैभाण्डकिस्तस्य वारणं शक्रवारणम् । अवतारयामास महीं मन्त्रैर्वाहनमुत्तमम् ॥ ४४
हर्यङ्गस्य[23][24] सुतस्तत्र राजा भद्ररथः स्मृतः । पुत्रो भद्ररथस्याऽऽसीद्बृहत्कर्मा प्रजेश्वरः ॥ ४५
बृहद्दर्भः सुतस्तस्य यस्माज्जज्ञे बृहन्मनाः । बृहन्मनास्तु राजेन्द्रो जनयामास वै सुतम् ॥ ४६
नाम्ना जयद्रथं नाम यस्माद्दृढरथो नृपः । आसीद्दृढरथस्यापि विश्वजिज्जनमेजयी ॥ ४७
दायादस्तस्य वैकर्णो विकर्णस्तस्य चाऽऽत्मजः । तस्य पुत्रशतं त्वासीदङ्गानां कुलवर्धनम् ॥ ४८
एतेऽङ्गवंशजाः सर्वे राजानः कीर्तिता मया । सत्यव्रता महात्मानः प्रजावन्तो महारथाः ॥ ४९

---

१ ग. दर्वा । २ ख. कृम्याः । ३ ग. दर्वायाः । ४ क. °राष्ट्रास्तु कृ° । ५ क. कृमिभा । ६ ख. °था त्वष्टा शि° । ७ क. वृकदर्भः । ८ क. वृकदर्भाः । ९ ख. °माः । तैति° । ग. °माः । तैतिक्षवोऽम° । १० क. °र्यैः शालस्त° । ११ क. शालस्य । १२ ग. बली । १३ ग. वालेयं । १४ क. °शसमुद्भवाः । ब° । १५ क. बलं चाप्रतिमं तस्य तथा धर्मार्थचिन्तनम् । १६ क. °न्यं सर्वतस्तथा । १७ ख. विप्रा वर्जेस्था° । १८ ख. वङ्गाश्च सु° । १९ क. °रतो ना° । २० क. धर्मरथः । २१ क. °थ धर्मर° । २२ क. °र्यश्वोऽस्य । २३ ग. °[illegible]

ऋचेयोस्तु मुनिश्रेष्ठा रौद्राश्वतनयस्य वै । शृणुध्वं संप्रवक्ष्यामि वंशं राज्ञस्तु भो द्विजाः ॥ ५०
ऋचेयोस्तनयो राजा मतिनारो महीपतिः । मतिनारसुतास्त्वासंस्त्रयः परमधार्मिकाः ॥ ५१
वसुरोधः प्रतिरेथः सुबाहुश्चैव धार्मिकः । सर्वे वेदविदश्चैव ब्रह्मण्याः सत्यवादिनः ॥ ५२
इला नाम तु यस्याऽऽसीत्कन्या वै मुनिसत्तमाः । ब्रह्मवादिन्यधिस्त्री सा तंसुस्तामभ्यगच्छत ॥
तंसोः सुतोऽथ राजर्षिर्धर्मनेत्रः प्रतापवान् । ब्रह्मवादी पराक्रान्तस्तस्य भार्योपदानवी ॥ ५४
उपदानवी ततः पुत्रांश्चतुरोऽजनयच्छुभान् । दुष्यन्तमथ सुष्मन्तं प्रवीरमनघं तथा ॥ ५५
दुष्यन्तस्य तु दायादो भरतो नाम वीर्यवान् । स सर्वदमनो नाम नागायुतबलो महान् ॥ ५६
चक्रवर्ती सुतो जज्ञे दुष्यन्तस्य महात्मनः । शकुन्तलायां भरतो यस्य नाम्ना तु भारताः ॥ ५७
भरतस्य विनष्टेषु तनयेषु महीपतेः । मातॄणां तु प्रकोपेण मया तत्कथितं पुरा ॥ ५८
बृहस्पतेरङ्गिरसः पुत्रो विप्रो महामुनिः । अयाजयद्भरद्वाजो महद्भिः क्रतुभिर्विभुः ॥ ५९
पूर्वं तु वितथे तस्य कृते वै पुत्रजन्मनि । ततोऽथ वितथो नाम भरद्वाजात्सुतोऽभवत् ॥ ६०
ततोऽथ वितथे जाते भरतस्तु दिवं ययौ । वितथं चाभिषिच्याथ भरद्वाजो वनं ययौ ॥ ६१
स चापि वितथः पुत्राञ्जनयामास पञ्च वै । सुहोत्रं च सुहोतारं गयं गर्गं तथैव च ॥ ६२
कपिलं च महात्मानं सुहोत्रस्य सुतद्वयम् । कौशिकं च महासत्यं तथा गृत्समतिं नृपम् ॥ ६३
तथा गृत्समतेः पुत्रा ब्राह्मणाः क्षत्रिया विशः । कौशिकस्य तु काशेयः पुत्रो दीर्घतपास्तथा ६४
भूत्र दीर्घतपसो विद्वान्धन्वन्तरिः सुतः । धन्वन्तरेस्तु तनयः केतुमानिति विश्रुतः ॥ ६५
तथा केतुमतः पुत्रो विद्वान्भीमरथः स्मृतः । पुत्रो भीमरथस्यापि वाराणस्यधिपोऽभवत् ॥ ६६
दिवोदास इति ख्यातः सर्वक्षत्रप्रणाशनः । दिवोदासस्य पुत्रस्तु वीरो राजा प्रतर्दनः ॥ ६७
प्रतर्दनस्य पुत्रौ द्वौ वत्सो भार्गव एव च । अलर्को राजपुत्रस्तु राजा सन्मतिमान्भुवि ॥ ६८
हयस्य तु दायाद्यं हृतवान्वै महीपतिः । आजह्रे पितृदायाद्यं दिवोदासहृतं बलात् ॥ ६९
भद्रश्रेण्यस्य पुत्रेण दुर्दमेन महात्मना । दिवोदासेन बालेति घृणयाऽसौ विसर्जितः ॥ ७०
अष्टारथो नाम नृपः सुतो भीमरथस्य वै । तेन पुत्रेण बालस्य प्रहृतं तस्य भो द्विजाः ॥ ७१
तस्यान्तं मुनिश्रेष्ठाः क्षत्रियेण विधित्सता । अलर्कः काशिराजस्तु ब्रह्मण्यः सत्यसंगरः ॥ ७२
षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च । युवा रूपेण संपन्न आसीत्काशिकुलोद्वहः ॥ ७३
लोपामुद्राप्रसादेन परमायुरवाप स सः । वयसोऽन्ते मुनिश्रेष्ठा हत्वा क्षेमकराक्षसम् ॥ ७४
रम्यां निवेशयामास पुरीं वाराणसीं नृपः । अलर्कस्य तु दायादः क्षेमको नाम पार्थिवः ॥ ७५
क्षेमकस्य तु पुत्रो वै वर्षकेतुस्ततोऽभवत् । वर्षकेतोश्च दायादो विभुर्नाम प्रजेश्वरः ॥ ७६

* इत आरभ्याष्टकस्य सुतो लौहिरित्यन्तो नास्ति पाठः ख. पुस्तके ।

१ ख. तमुरोधः । २ ख. °रथो बाहुश्चैव तु धा° । ३ क. °र्वे प्रभावि° । ख. °र्वे धर्मवि° । ४ ख. ब्राह्मणाः । ५ दुष्कन्त° । ६ ख. पुष्कन्तं । ७ ख. दुष्कन्त° । ८ क. ख. दुष्कन्त । ९ क. ख. भारतम् । १० क. °या ते परिकीर्तिताः । बृ° । ११ क. °विभुम् । पू° । १२ क. ख. °द्वाजपुतोऽ° । १३ क. तर्ज । ग. गर्ह । १४ क. कौशिकं । क. मृगमतिं । १६ क. मृगमतेः । १७ क. कौशिकस्य । १८ क. ख. अथ । १९ क. ख्यातो रोगदुष्टनिबर्हणः । । २० ख. °र्वेक्षाव° । २१ ख. पुत्रोऽभूद्वीरो । २२ क. °स्तु सत्यवादी प्र° । २३ ख. वत्सो । २४ ख. °मानपि । है° । क. ख. दायादो । २६ ग. °र्वे कृत° । २७ क. °वासवान् । व° । २८ क. पुनः । २९ क. तु दायादो व° । ३० क. महीपतिः । व° ।

आनर्तस्तु विभोः पुत्रः सुकुमारस्ततोऽभवत् । सुकुमारस्य पुत्रस्तु सत्यकेतुर्महारथः ॥ ७७
सुतोऽभवन्महातेजा राजा परमधार्मिकः । वत्सस्य वत्सभूमिस्तु भर्गभूमिस्तु भार्गवात् ॥ ७८
एते त्वङ्गिरसः पुत्रा जाता वंशेऽथ भार्गवे । ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च मुनिसत्तमाः ७९
+आजमीढोऽपरो वंशः श्रूयतां द्विजसत्तमाः । सुहोत्रस्य बृहत्पुत्रो बृहतस्तनयास्त्रयः ॥ ८०
अजमीढो द्विमीढश्च पुरुमीढश्च वीर्यवान् । अजमीढस्य पत्न्यस्तु तिस्रो वै यशसाऽन्विताः ॥ ८१
नीली च केशिनी चैव धूमिनी च वराङ्गनाः । अजमीढस्य केशिन्यां जज्ञे जह्नुः प्रतापवान् ८२
आजह्रे यो महासत्रं सर्वमेधमखं विभुम् । पतिलोभेन यं गङ्गा विनीतेव ससार ह ॥ ८३
नेच्छतः प्लावयामास तस्य गङ्गा च तत्सदः । तत्तया प्लावितं दृष्ट्वा यज्ञवाटं समन्ततः ॥ ८४
जह्नुरप्यब्रवीद्गङ्गां क्रुद्धो विप्रास्तदा नृपः । एष ते त्रिषु लोकेषु संक्षिप्याऽपः पिबाम्यहम् ॥
अस्य गङ्गेऽवलेपस्य सद्यः फलमवाप्नुहि ॥ ८५
ततः पीतां महात्मानो दृष्ट्वा गङ्गां महर्षयः । उपनिन्युर्महाभागा दुहितृत्वेन जाह्नवीम् ॥ ८६
युवनाश्वस्य पुत्रीं तु कावेरीं जह्नुरावहत् । गङ्गाशापेन देहार्धं यस्याः पश्चान्नदीकृतम् ॥ ८७
जह्नोस्तु दयितः पुत्रो अजको नाम वीर्यवान् । अजकस्य तु दायादो बलाकाश्वो महीपतिः ८८
बभूव मृगयाशीलः कुशिकस्तस्य चाऽऽत्मजः । पह्लवैः सह संवृद्धो राजा वनचरैः सह ॥ ८९
कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमं विभुम् । लभेयमिति तं शक्रस्त्रासादभ्येत्य जज्ञिवान् ॥ ९०
स गाधिरभवद्राजा मघवा कौशिकः स्वयम् ।विश्वामित्रस्तु गाधेयो विश्वामित्रात्तथाऽष्टकः॥ ९१
अष्टकस्य सुतो लौहिः] प्रोक्तो जह्नुगणो मया । आजमीढोऽपरो वंशः श्रूयतां मुनिसत्तमाः ९२
अजमीढात्तु नील्यां वै सुशान्तिरुदपद्यत । पुरुजातिः सुशान्तेश्च बौबाश्वः पुरुजातितः ॥ ९३
बौबाश्वतनयाः पञ्च स्फीता जनपदावृताः । मुद्गलः सृञ्जयश्चैव राजा बृहदिषुस्तथा ॥ ९४

+इदमर्धं क. पुस्तके नास्ति ।

※ एतदनन्तरं ग. पुस्तकेऽधिकाः श्लोका उपलभ्यन्ते ते यथा—

"विश्वबाधिः श्वजिच्चैव तथा सत्यवती द्विजाः । ऋचीकाज्जमदग्निस्तु सत्यवत्यामजायत ॥
विश्वामित्रस्य तु सुता देवरातादयः स्मृताः । प्रख्यातास्त्रिषु लोकेषु तेषां नामानि मे द्विजाः ॥
देवरातः कतिश्चैव यस्मात्कात्यायनः स्मृतः । शालवत्यां हिरण्याक्षो रेणुर्गस्याथ रेणुका ॥
सांकृत्यां गालवा विप्रा मौद्गल्याश्चेति विश्रुताः । तेषां ख्यातानि गोत्राणि कौशिकानां महात्मनाम् ॥
पाणिनो बभ्रवश्चैव ध्यानजप्यास्तथैव च । पार्थिवा देवराताश्च शालङ्कायनसौश्रवाः ॥
लोहिता यामभूताश्च तथा कारीषयः स्मृताः । विश्रुताः कौशिका विप्रास्तथाऽन्ये सैन्धवायनाः ॥
ऋष्यन्तरविवाह्याश्च कौशिका बहवः स्मृताः । पौरवस्य मुनिश्रेष्ठा ब्रह्मर्षेः कौशिकस्य च ॥
संबन्धोऽस्याथ वंशेऽस्मिन्ब्रह्मक्षत्रस्य विश्रुतः । विश्वामित्रात्मजानां तु शुनःशेफोऽग्रजः स्मृतः ॥
भार्गवः कौशिकत्वं हि प्राप्तः स मुनिपुंगवः । देवरातादयश्चापि विश्वामित्रस्य वै सुताः ॥
दृषद्वतीसुतश्चापि विश्वामित्रात्तथाऽष्टकः ॥

१ क. °स्तु च्यवनो नाम भार्गवः । ए° । २ क. °गास्तनः । अ° । ३ क. °ष्ठो रूपगुणान्वि° । ४ क. नीलिनी के° ५ क. °स्य पुत्रस्तु जह्नुर्जज्ञे प्र° । ६ ग. °मेव महायशाः । प° । ७ घ. तस्य । ८ क. हार्धोयस्य प° । ९ क. कृता ज° । १० क. निषादैः । ११ क. °पे रम्यमिन्द्रपदं प्रभुः । ल° । १२ क. °यो राजा विश्वरथस्तथा । १३ ख. अलर्कस्य १४ ख. ग. °या । मज° । १५ क. ख. नीलिन्यां सु° । १६ क. °जातिसु° । ख. °जातिसुशान्ते च बा° । १७ क. बाह्यश्व १८ ख. °ह्याश्च पुरुजातिजाः । बाह्याश्च तनयाः पञ्च बभूवुरमरोपमाः । मु° । १९ क. बाह्यस्य त° । २० क. °श्च बभूवुरमरोपमाः । मु° ।

नरश्च विक्रान्तः कृमिलाश्वश्च पञ्चमः । पञ्चैते रक्षणायालं देशानामिति विश्रुताः ॥ ९५
र्नां ते तु पञ्चालाः स्फीता जनपदावृताः । अलं संरक्षणे तेषां पञ्चाला इति विश्रुताः ९६
स्य तु दायादो मौद्गल्यः सुमहायशाः + । इन्द्रसेना यतो गर्भं वैध्न्यं च प्रत्यपद्यत ॥ ९७
ोत्पञ्चजनः पुत्रः सृञ्जयस्य महात्मनः । सुतः पञ्चजनस्यापि सोमदत्तो महीपतिः ॥ ९८
दत्तस्य दायादः सहदेवो महायशाः । सहदेवसुतश्चापि सोमको नाम विश्रुतः ॥ ९९
ीढसुतो जातः क्षीणे वंशे तु सोमकः । सोमकस्य सुतो जन्तुर्यस्य पुत्रशतं बभौ ॥ १००
यवीयान्पृषतो द्रुपदस्य पिता प्रभुः । आजमीढाः स्मृताश्चैते महात्मानस्तु सोमकाः ॥१०१
ी त्वजमीढस्य धूमिनी *पुत्रगृद्धिनी । पतिव्रता महाभागा कुलजा मुनिसत्तमाः ॥ १०२
च पुत्रार्थिनी देवी व्रतचर्यासमन्विता । ततो वर्षायुतं तप्त्वा तपः परमदुश्चरम् ॥ १०३
ऽग्निं विधिर्वत्सा तु पवित्रा मितभोजना । अग्निहोत्रकुशेष्वेव सुष्वाप मुनिसत्तमाः] ॥ १०४
या स तया देव्या त्वजमीढः समीयिवान् । ऋक्षं संजनयामास धूम्रवर्णं सुदर्शनम् ॥१०५
त्संवरणो जज्ञे कुरुः संवरणात्तथा । यः प्रयागादतिक्रम्य कुरुक्षेत्रं चकार ह ॥ १०६
च रमणीयं च पुण्यकृद्भिर्निषेवितम् । तस्यान्ववायः सुमहान्यस्य नाम्नाऽथ कौरवाः १०७
पुत्राश्चत्वारः सुधन्वा सुधनुस्तथा । परीक्षिच्च महाबाहुः प्रवरश्चारिमेजयः ॥ १०८
क्षितस्तु दायादो धार्मिको जनमेजयः+ । श्रुतसेनोऽग्रसेनश्च भीमसेनश्च नामतः ॥ १०९
र्वे महाभागा विक्रान्ता बलशालिनः । जनमेजयस्य पुत्रस्तु सुरथो मतिमांस्तथा ॥ ११०
स्य तु विक्रान्तः पुत्रो जज्ञे विदूरथः । विदूरथस्य दायाद ऋक्ष एव महारथः ॥ १११

---

एतदनन्तरं क. पुस्तके—
"पुत्रः सत्यधृतिर्नाम धनुर्वेदस्य पारगः । तस्य सत्यधृते रेतो दृष्ट्वाऽप्सरसमग्रतः ॥
अवस्कन्नं शरस्तम्बे मिथुनं समपद्यत । कृपया तच्च जगृहे शंतनुर्मृगयां गतः ॥
कृपः स्मृतः स वै तस्माद्गौतमी च कृपी स्मृता । एते शारद्वताः प्रोक्ता एते ते गौतमाः स्मृताः ॥
अत ऊर्ध्वं प्रवक्ष्यामि दिवोदासस्य संततिम् । दिवोदासस्य दायादो ब्रह्मर्षिर्मित्रयुर्नृपः ॥
मित्रयोस्तु ततः सोमो मैत्रेयास्ते ततः स्मृताः । एतेऽपि संश्रिताः पक्षं क्षत्रोत्पन्नास्तु भार्गवम्" ॥
येते श्लोका अधिका उपलभ्यन्ते, इन्द्रसेनेत्याद्यर्धं च नोपलभ्यते ॥
पुस्तकत्रयेऽप्ययमेव पाठः । + एतदादि मुनिसत्तमा इत्यन्तं नास्ति ख. पुस्तके । * इदमर्धं कपुस्तके नास्ति ।
इतःपरमधिकाः श्लोकाः ख. पुस्तके ते यथा—
"सुधन्वनस्तु दायादः सुहोत्रो मतिमान्स्मृतः । च्यवनस्तस्य पुत्रस्तु राजा धर्मार्थकोविदः ॥
च्यवनात्कृतयज्ञस्तु इष्ट्वा यज्ञैस्तु धर्मवित् । विश्रुतं जनयामास पुत्रमिन्द्रसखं नृपम् ॥
चैद्योपरिवरं वीरं वसुं नाम्नाऽन्तरिक्षगम् । चैद्योपरिवाराज्जज्ञे गिरिका सप्त मानवान् ॥
महारथो मगध इति विश्रुतो यो बृहद्रथः । प्रत्यग्रथः क्रथश्चैव यमाहुर्मणिवाहनम् ॥
शाकलश्च यदुश्चैव मत्स्यः काली च सप्तमः । बृहद्रथस्य दायादः कुशाग्रो नाम विश्रुतः ॥
कुशाग्रस्याऽऽत्मजो विद्वानृषभो नाम वीर्यवान् । जह्नोस्तु कथयिष्यामि वंशं सर्वगुणान्वितम् ॥
जह्नुस्त्वजनयत्पुत्रं सुरथो नाम भूमिपम्" इति ॥

---

क. पञ्चानां । ख. पञ्च ते र° । २ ख. °ञ्चालानां तु । ३ ग. वध्वश्च प्र° । ४ ख. °तः । तथा गलसमतेः पुत्रो महाबलः । अ° । ५ क. °षतः पृषतस्य विभावसुः । आ° । ६ क. ख. °ता ह्येते । ७ ख. सोमकात् । ८ क. ° । ९ क. °विप्रामि° । १० ग. सुदर्शनः । ११ क. ख. °स्ततः । यः । १२ क. परीक्षितो । ग. मरीचिश्च । न्मेज° । १४ ख. पुत्रोऽभूत्सुर° । ग. पुत्रौ तु सु° । १५ ग. क्षत्र । १६ क. ख. महाबलः ।

द्वितीयस्तु भरद्वाजान्नाम्ना तेनैव विश्रुतः । द्वावृक्षौ सोमवंशेऽस्मिन्द्वावेव च परीक्षितौ ॥ ११२
भीमसेनास्त्रयो विप्रा द्वौ चापि जनमेजयौ । ऋक्षस्य तु द्वितीयस्य भीमसेनोऽभवत्सुतः ॥ ११३
प्रतीपो भीमसेनात्तु प्रतीपस्य तु शान्तनुः । देवापिर्बाह्लिकश्चैव त्रय एव महारथाः ॥ ११४
शान्तनोस्त्वभवद्भीष्मस्तस्मिन्वंशे द्विजोत्तमाः । बाह्लिकस्य तु राजर्षेर्वंशं शृणुत भो द्विजाः ११५
बाह्लिकस्य सुतश्चैव सोमदत्तो महायशाः । जज्ञिरे सोमदत्तात्तु भूरिर्भूरिश्रवाः शलः ॥ ११६
उपाध्यायस्तु देवानां देवापिरभवन्मुनिः । च्यवनपुत्रः कृतक इष्ट आसीन्महात्मनः ॥ ११७
शान्तनुस्त्वभवद्राजा कौरवाणां धुरंधरः । शान्तनोः संप्रवक्ष्यामि वंशं त्रैलोक्यविश्रुतम् ॥ ११८
गाङ्गं देवव्रतं नाम पुत्रं सोऽजनयत्प्रभुः । स तु भीष्म इति ख्यातः पाण्डवानां पितामहः ११९
काली विचित्रवीर्यं तु जनयामास भो द्विजाः । शान्तनोर्दयितं पुत्रं धर्मात्मानमकल्मषम् ॥ १२०
कृष्णद्वैपायनाच्चैव क्षेत्रे वैचित्रवीर्यके । धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत्+ ॥ १२१
[*धृतराष्ट्रस्तु गान्धार्यां पुत्रानुत्पादयच्छतम्] । तेषां दुर्योधनः श्रेष्ठः सर्वेषामपि स प्रभुः १२२
पाण्डोर्धनंजयः पुत्रः सौभद्रस्तस्य चाऽऽत्मजः । अभिमन्योः परीक्षित्तु पिता पारीक्षितस्य ह
पारीक्षितस्य काश्यायां द्वौ पुत्रौ संबभूवतुः । चन्द्रापीडस्तु नृपतिः सूर्यापीडश्च मोक्षवित् ॥
चन्द्रापीडस्य पुत्राणां शतमुत्तमधन्विनाम् । जानमेजयमित्येवं क्षात्रं भुवि परिश्रुतम् ॥
तेषां ज्येष्ठस्तु तत्राऽऽसीत्पुरे वारणसाह्वये । सत्यकर्णो महाबाहुर्यज्वा विपुलदक्षिणः ॥
सत्यकर्णस्य दायादः श्वेतकर्णः प्रतापवान् । अपुत्रः स तु धर्मात्मा प्रविवेश तपोवनम् ॥
तस्माद्वनगता गर्भं यादवी प्रत्यपद्यत । सुचारोर्दुहिता सुभ्रूर्मालिनी ग्राहमालिनी ॥
संभूते स च गर्भे च श्वेतकर्णः प्रजेश्वरः । अन्वगच्छत्कृतं पूर्वं महाप्रस्थानमच्युतम् ॥

+ एतदनन्तरं ख.पुस्तकेऽधिकाः श्लोका उपलभ्यन्ते ते चाग्रे लिखिताः—

"तथाऽजपार्श्व इति वै चक्राते तस्य नाम तत् । स तु वेमकशालायां द्विजानां परिवर्धितः ॥
वेमकस्य तु भार्या तमुद्व(?)हत्पुत्रकारणात् । वेमक्याः स तु पुत्रोऽभूद्ब्राह्मणौ सचिवौ च तौ ॥
तेषां पुत्राश्च पौत्राश्च युगपत्तुल्यजीविनः । स एष पौरवो वंशः पाण्डवानां प्रतिष्ठितः ॥
श्लोकोऽपि चात्र गीतोऽयं नाहुषेण ययातिना । जरासंक्रमणे पूर्वं भृशं प्रीतेन धीमता ॥
अचन्द्रार्कग्रहा भूमिर्भवेदत्र न संशयः । अपौरवा न तु मही भविष्यति कदाचन ॥
एष वः पौरवो वंशो विख्यातः कथितो मया । तुर्वसोश्च प्रवक्ष्यामि द्रुह्योश्चानोर्यदोस्तथा ॥
तुर्वसोश्च सुतो वह्निर्गोभानुस्तस्य चाऽऽत्मजः । गोभानोस्तु सुतो राजा त्रैसानुरपराजितः ॥
करंधमस्तु त्रैसानोर्मरुतस्तस्य चाऽऽत्मजः । अन्यस्त्वविजितो राजा मरुतः कथितस्तव ॥
राजा च परमायुश्च यज्वा विपुलदक्षिणः । दुहिता संयता नाम्नी तस्याऽऽसीत्पृथिवीपतेः ॥
दक्षिणार्थे हि सा दत्ता संवर्ताय महात्मने । दुष्यन्तं पौरवं चापि लेभे पुत्रमकल्मषम् ॥
एवं ययातेः शापेन जरासंक्रमणे तदा । पौरवं तुर्वसोर्वंशं प्रविवेश नृपोत्तमः ॥
दुष्यन्तस्य तु दायादः करूथः स नरेश्वरः । करूथादथक्रीडाश्च(?) चत्वारस्तस्य चाऽऽत्मजाः ॥
यामश्च केरलश्चैव कोलश्चोलश्च पार्थिवः । तेषां जनपदाः स्फीताः पाण्ड्याश्चोलाश्च केरलाः ॥
द्रुह्योश्च तनयो विप्रा बभ्रुः सेतुश्च पार्थिवः" इति ॥

* धृतराष्ट्रेण गान्धार्यां पुत्रा उत्पादिताः शतमिति तूचितम् ।

१ क. ख. °यस्त्वभवद्राजा नाम्ना । २ क. °स्मिन्विख्यातौ द्विजसत्तमाः । भी° । ३ क. ख. शंतनुः । ४ क. °सात्सोम° । ५ ग. °त्तु हविर्भूरि° । ६ ख. °वनः पुत्रकृ° । ७ ख. इन्दुश्चाऽऽसीन्महामतिः । शा° । ८ क. ख. °षा
९ क. मोक्षजित् । १० क. ख. जान्मेजयं व इत्ये° । ११ क. ख. °त्रं तु वि° ।

तु दृष्ट्वा प्रियं तं च मालिनी पृष्ठतोऽन्वगात् । सुचारोर्दुहिता साध्वी वने राजीवलोचना ॥
थे सा सुषुवे बाला सुकुमारं कुमारकम् । तमपास्याथ तत्रैव राजानं साऽन्वगच्छत ॥ १३१
तिव्रता महाभागा द्रौपदीव पुरा सती । कुमारः सुकुमारोऽसौ गिरिपृष्ठे रुरोद ह ॥ १३२
पार्थं तस्य मेघास्तु प्रादुरासन्महात्मनः । श्रविष्ठायास्तु पुत्रौ द्वौ पैप्पलादिश्च कौशिकः ॥१३३
ष्ट्वा कृपान्वितौ *गृह्य तौ प्राक्षालयतां जले । निघृष्टौ तस्य पार्श्वौ तु शिलायां रुधिरप्लुतौ ॥
जश्यामः स पार्श्वाभ्यां घृष्टाभ्यां सुसमाहितः । अजश्यामौ तु तत्पार्श्वौ देवेन संबभूवतुः ॥
-अथाजपार्श्व इति वै चक्राते नाम तस्य तौ । स तु रेमकशालायां द्विजाभ्यामभिवर्धितः १३६
मकस्य तु भार्या तमुद्वह(?)त्पुत्रकारणात् । रेमत्याः स तु पुत्रोऽभूद्ब्राह्मणौ सचिवौ तु तौ १३७
षां पुत्राश्च पौत्राश्च युगपत्तुल्यजीविनः । स एष पौरवो वंशः पाण्डवानां महात्मनाम् ॥ १३८
श्लोकोऽपि चात्र गीतोऽयं नाहुषेण ययातिना । जरासंक्रमणे पूर्वं तदा प्रीतेन धीमता ॥ १३९
चन्द्रार्कग्रहा भूमिर्भवेदियमसंशयम् । अपौरवा मही नैव भविष्यति कदाचन ॥ १४०
व वः पौरवो वंशो विख्यातः कथितो मया । तुर्वसोस्तु प्रवक्ष्यामि द्रुह्योश्चानोर्यदोस्तथा १४१
सोस्तु सुतो वह्निर्गोभानुस्तस्य चाऽऽत्मजः । गोभानोस्तु सुतो राजा ऐशानुरपराजितः १४२
धमस्तु ऐशानोर्मरुत्तस्तस्य चाऽऽत्मजः । अन्यस्त्वाविक्षितो राजा मरुत्तः कथितो मया १४३
नपत्योऽभवद्राजा यज्वा विपुलदक्षिणः । दुहिता संयता नाम तस्याऽऽसीत्पृथिवीपतेः १४४
क्षिणार्थं तु सा दत्ता संवर्ताय महात्मने । दुष्यन्तं पौरवं चापि लेभे पुत्रमकल्मषम् ॥ १४५
ं ययातिशापेन जरासंक्रमणे तदा । पौरवं तुर्वसोर्वंशं प्रविवेश द्विजोत्तमाः ॥ १४६
ष्यन्तस्य तु दायादः करूरोमः प्रजेश्वरः । करूरोमादथाह्रीदश्चत्वारस्तस्य चाऽऽत्मजाः १४७
ड्यश्च केरलश्चैव कालश्चोलश्च पार्थिवः । द्रुह्योश्च तनयो राजन्बभ्रुसेतुश्च पार्थिवः] ॥ १४८
ारसेतुस्तत्पुत्रो मरुतां पतिरुच्यते । यौवनाश्वेन समरे कृच्छ्रेण निहतो बली ॥ १४९
सुमहदप्यासीन्मासान्परिचंरद्दश । अङ्गारसेतोर्दायादो गान्धारो नाम पार्थिवः ॥ १५०
ायते यस्य नाम्ना वै गान्धारविषयो महान् । गान्धारदेशजाश्चैव तुरगा वाजिनां वराः १५१
ोस्तु पुत्रो धर्मोऽभूद्घृतस्तस्याऽऽत्मजोऽभवत् । घृताद्दुर्दुहो जज्ञे प्रचेतास्तस्य चाऽऽत्मजः
तसः सुचेतास्तु कीर्तितास्त्वनवो म(स्तुर्वसोर्म)या । बभूवुस्तु यदोः पुत्राः पञ्च देवसुतोपमाः ॥
स्रादः पयोदश्च क्रोष्टा नीलोऽञ्जिकस्तथा । सहस्रादस्य दायादास्त्रयः परमधार्मिकाः ॥ १५४
यश्च हयश्चैव राजा वेणुहयस्तथा । हैहयस्याभवत्पुत्रो धर्मनेत्र इति श्रुतः ॥ १५५
नेत्रस्य कार्तस्तु साहञ्जस्तस्य चाऽऽत्मजः । साहञ्जनी नाम पुरी तेन राज्ञा निवेशिता १५६
सीन्*महिष्मतः पुत्रो भद्रश्रेण्यः प्रतापवान् । भद्रश्रेण्यस्य दायादो दुर्दमो नाम विश्रुतः ॥१५७
स्य सुतो धीमान्कनको नाम नामतः । कनकस्य तु दायादाश्चत्वारो लोकविश्रुताः ॥ १५८

---

ल्यवार्थः । + इत आरभ्याग्रे बभ्रुसेतुश्च पार्थिव इत्यन्तं ख. पुस्तके नास्ति । * इदं साहञ्जस्यापरं नामेति भाति ।

---

१ ग. °पती च पु° । २ ख. °दी च पुरातनी । कु° । ३ ख. कुमारं । ४ ख. गिरिकुम्भे । ५ क. ह । पार्श्वत-
। ६ ख. °ल्यादि° । ७ क. ख. तं । ८ क. रुधिरोक्षितौ । ९ ग. °श्यामस्य पा° । १० क. °श्वाभ्यामुभाभ्यां ।
ग. °रुपामा° । १२ ग. °चतुर्दश । १३ ख. ख्यातस्तु । १४ ख. °भूद्घृत° । १५ ख. °त् । घृताच्छतद्रुहो । १६ ख.
निलोऽ° । १७ ख. °हश्च हैह । श्चै° । १८ ग. °स्तु कार्तपुत्रास्तथाऽभवन् । कृ° ।

कृतवीर्यः कृतौजाश्च कृतधन्वा तथैव च । कृताग्निस्तु चतुर्थोऽभूत्कृतवीर्यादथार्जुनः ॥ १५९
योऽसौ बाहुसहस्रेण सप्तद्वीपे[3]श्वरोऽभवत् । जिगाय पृथिवीमेको रथेनाऽऽदित्यवर्चसा ॥ १६०
स हि वर्षायुतं तप्त्वा तपः परमदुश्चरम् । दत्तमाराधयामास कार्तवीर्योऽत्रिसंभवम् ॥ १६१
तस्मै दत्तो वरान्प्रादाच्चतुरो भूरितेजसः । पूर्वं बाहुसहस्रं तु प्रार्थितं सुमहद्वरम् ॥ १६२
अधर्मेऽधीयमानस्य सद्भिस्तत्र निवारणम् । उग्रेण पृथिवीं जित्वा धर्मेणैवानुरञ्जनम् ॥ १६३
सङ्ग्रामान्सुबहूञ्जित्वा हत्वा चारीन्सहस्रशः । सङ्ग्रामे वर्तमानस्य वधं चाभ्यधिकाद्रणे ॥ १६४
तस्य बाहुसहस्रं तु युध्यतः किल भो द्विजाः । योगाद्योगीश्वरस्येव प्रादुर्भवति मायया ॥ १६५
तेनेयं पृथिवी सर्वा सप्तद्वीपा सपत्तना । ससमुद्रा सनगरा उग्रेण विधिना जिता ॥ १६६
तेन सप्तसु द्वीपेषु सप्त यज्ञशतानि वै । प्राप्तानि विधिना राज्ञा श्रूयन्ते मुनिसत्तमाः ॥ १६७
सर्वे यज्ञा मुनिश्रेष्ठाः सहस्रशतदक्षिणाः । *सर्वे काञ्चनयूपाश्च सर्वे काञ्चनवेदयः ॥ १६८
सर्वे देवैर्मुनिश्रेष्ठा विमानस्थैरलंकृतैः । गन्धर्वैरप्सरोभिश्च नित्यमेवोपशोभिताः ॥ १६९
यस्य यज्ञे जगौ गाथां गन्धर्वो नारदस्तथा । वरीदासात्मजो विद्वान्महिम्ना तस्य विस्मितः ॥

नारद उवाच— १७०

न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः । यज्ञैर्दानैस्तपोभिश्च विक्रमेण श्रुतेन च ॥ १७१
स हि सप्तसु द्वीपेषु चर्मी खड्गी शरासनी । रथी द्वीपाननुचरन्योगी संदृश्यते नृभिः ॥ १७२
अनष्टद्रव्यता चैव न शोको न च विभ्रमः । प्रभावेण महाराज्ञः प्रजा धर्मेण रक्षतः ॥ १७३
स सर्वरत्नभाक्सम्राट्चक्रवर्ती बभूव ह । स एव पशुपालोऽभूत्क्षेत्रपालः स एव च ॥ १७४
स एव वृष्ट्या पर्जन्यो योगित्वादर्जुनोऽभवत् । स वै बाहुसहस्रेण ज्याघातकठिनत्वचा ॥ १७५
भाति रश्मिसहस्रेण शरदीव च भास्करः । स हि नागान्मनुष्येषु माहिष्मत्यां महाद्युतिः ॥ १७६
कर्कोट[11]कसुताञ्जित्वा पुर्यां तस्यां न्यवेशयत् । स वै वेगं समुद्रस्य प्रावृट्कालेऽम्बुजेक्षणः ॥ १७७
क्रीडन्निव भुजोद्भिन्नं प्रतिस्रोतश्चकार ह । लुण्ठिता क्रीडता तेन[12] नदी तद्ग्राममालिनी[13] ॥ १७८
चलदूर्मिसहस्रेण श[14]ङ्किताऽभ्येति नर्मदा । तस्य बाहुसहस्रेण क्षिप्यमाणे महोदधौ ॥ १७९
भयान्निलीना निश्चेष्टाः पातालस्था महीसुराः । चूर्णीकृतमहावीचिं[15] चलन्मीनमहातिमिम् ॥ १८०
मा[16]रुताविद्धफेनौघमावर्तक्षो[17]भसंकुलम् । प्रावर्तयत्तदा राजा सह[18]स्रेण च बाहुना ॥ १८१
देवासुरसमाक्षिप्तः क्षीरोदमिव मन्द[19]रैः । मन्दरक्षोभचकि[20]तां अमृतोत्पादशङ्किताः ॥ १८२
सहसोत्पतिता भीता भीमं दृष्ट्वा नृपोत्तमम् । नता निश्चलमूर्धानो बभूवुस्ते महोरगाः ॥ १८३
सायाह्ने कदलीखण्डाः कम्पिता इव वायुना । स वै बद्ध्वा धनुर्ज्याभिरुत्सिक्तं पञ्चभिः शरैः
लङ्केशं मोहयित्वा तु स[21]बलं रावणं बलात् । निर्जित्य वशमानीय माहिष्मत्यां बबन्ध तम् १८४

* इदमर्धं ख. पुस्तके नास्ति ।

१ ख. कृतकर्मा । २ क. कृताविनश्चतु° । ३ ख. °द्वीपाधिपोऽभ° । ४ ख. °त्वा स्वधर्मेणानु° । ५ ख. °ल भारतः यो° । ६ ख. वरदा° । ७ ख. °भिर्वा वि° । ८ क. सत्कृतः । ग. राक्षिताः । ९ क. स तु सर्वत्र भोगाढ्यश्चक्र° । १० ख °त्नभोगाढ्यश्चक्र° । ११ ख. °कयतान्क्षिप्त्वा पु° । १२ ग. °न फेनश्चोद्दाम° । १३ ग. °नी । वल° । १४ ग. °ङ्किनाऽभ्ये° १५ ग. °चिं वल° । १६ क. °रुतोद्भिन्नके° । १७ ग. °भदुःसहम् । १८ क. °स्रेणैव बा° । १९ ख. °रः । तत्संक्षोभेणाऽऽचकितास्ताक्ष्यागमनश° । २० क. °तास्ताक्ष्यागमनश° । २१ ग. सगणं ।

श्रुत्वा तु बद्धं पौलस्त्यं रावणं त्वर्जुनेन च । ततो गत्वा पुलस्त्यस्तमर्जुनं ददृशे स्वयम् ॥ १८६
मुमोच रक्षः पौलस्त्यं पुलस्त्येनाभियाचितः । यस्य बाहुसहस्रस्य बभूव ज्यातलस्वनः ॥ १८७
युगान्ते तोयदस्येव स्फुटतो ह्यशनेरिव । अहो बत मृधे वीर्यं भार्गवस्य यदच्छिनत् ॥ १८८
राज्ञो बाहुसहस्रस्य हैमं तालवनं यथा । तृषितेन कदाचित्स भिक्षितश्चित्रभानुना ॥ १८९
स भिक्षामददाद्वीरः सप्त द्वीपान्विभावसोः । पुराणि ग्रामघोषांश्च विषयांश्चैव सर्वशः ॥ १९०
जज्वाल तस्य सर्वाणि चित्रभानुर्दिदृक्षया । स तस्य पुरुषेन्द्रस्य प्रभावेण महात्मनः ॥ १९१
ददाह कार्तवीर्यस्य शैलांश्चैव वनानि च । स शून्यमाश्रमं रम्यं वरुणस्याऽऽत्मजस्य वै ॥ १९२
ददाह बलवद्भीतश्चित्रभानुः स हैहयः । यं लेभे वरुणः पुत्रं पुरा भास्वन्तमुत्तमम् ॥ १९३
वसिष्ठं(ष्ठो) नाम स मुनिः ख्यात आपव इत्युत । यत्राप(तत्राऽऽप)वस्तु तं क्रोधाच्छप्तवानर्जुनं विभुः
यस्मान्न वर्जितमिदं वनं ते मम हैहय । तस्मात्ते दुष्करं कर्म कृतमन्यो हनिष्यति ॥ १९५
रामो नाम महाबाहुर्जामदग्न्यः प्रतापवान् । छित्त्वा बाहुसहस्रं ते प्रमथ्य तरसा बली ॥ १९६
तपस्वी ब्राह्मणस्त्वां तु हनिष्यति स भार्गवः । अनष्टद्रव्यता यस्य बभूवामित्रकर्षिणः ॥ १९७
प्रतापेन नरेन्द्रस्य प्रजा धर्मेण रक्षतः । प्राप्तस्ततोऽस्य मृत्युर्वै तस्य शापान्महामुनेः ॥ १९८
वरस्तथैव भो विप्राः स्वयमेव वृतः पुरा । तस्य पुत्रशतं त्वासीत्पञ्च शेषा महात्मनः ॥ १९९
कृतास्त्रा बलिनः शूरा धर्मात्मानो यशस्विनः । शूरसेनश्च शूरश्च वृषणो मधुपध्वजः ॥ २००
जयध्वजश्च नाम्नाऽऽसीदावन्त्यो नृपतिर्महान् । कार्तवीर्यस्य तनया वीर्यवन्तो महाबलाः २०१
जयध्वजस्य पुत्रस्तु तालजङ्घो महाबलः । तस्य पुत्रशतं ख्यातास्तालजङ्घा इति स्मृताः २०२
तेषां कुले मुनिश्रेष्ठा हैहयानां महात्मनाम् । वीतिहोत्राः सुजाताश्च भोजाश्चावन्तयः स्मृताः ॥
तौण्डिकेराश्च विख्यातास्तालजङ्घास्तथैव च । भरताश्च सुजाताश्च बहुत्वान्नानुकीर्तिताः २०४
वृषप्रभृतयो विप्रा यादवाः पुण्यकर्मिणः । वृषो वंशधरस्तत्र तस्य पुत्रोऽभवन्मधुः ॥ २०५
मधोः पुत्रशतं त्वासीद्वृषणस्तस्य वंशकृत् । वृषणाद्वृष्णयः सर्वे मधोस्तु माधवाः स्मृताः ॥२०६
यादवा यदुनाम्ना ते निरुच्यन्ते च हैहयाः । न तस्य वित्तनाशः स्यान्नष्टं प्रति लभेच्च सः २०७
कार्तवीर्यस्य यो जन्म कथयेदिह नित्यशः । एते ययातिपुत्राणां पञ्च वंशा द्विजोत्तमाः ॥ २०८
कीर्तिता लोकवीराणां ये लोकान्धारयन्ति वै । भूतानीव मुनिश्रेष्ठाः पञ्च स्थावरजङ्गमान् २०९
श्रुत्वा पञ्च विसर्गांस्तु राजा धर्मार्थकोविदः । वशी भवति पञ्चानामात्मजानां तथेश्वरः ॥२१०
लभेत्पञ्च वरांश्चैव दुर्लभानिह लौकिकान् । आयुः कीर्तिं तथा पुत्रानैश्वर्यं भूतिमेव च ॥ २११
धारणाच्छ्रवणाच्चैव पञ्चवर्गस्य भो द्विजाः । क्रोष्टोर्वंशं मुनिश्रेष्ठाः शृणुध्वं गदतो मम ॥ २१२
यदोर्वंशधरस्याथ यज्विनः पुण्यकर्मिणः । क्रोष्टोर्वंशं हि श्रुत्वैव सर्वपापैः प्रमुच्यते ॥
यस्यान्ववायजो विष्णुर्हरिर्वृष्णिकुलोद्वहः ॥ २१३

इति श्रीमहापुराणे आदिब्राह्मे ययातिवंशानुकीर्तनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११०८

---

१ ख. तेजस्वी । २ ख. ग. वधिष्यति । ३ क. तस्य । ४ क. ग. प्रभावेण । ५ क. ग. °तः । रामात्ततो° । ६ क. ख. °शतान्यासन्पञ्च । ७ क. धन्विनः । ८ ग. °श्च धृष्टोक्तः कृष एव च । ज° । ९ ख. महावीर्या । १० ग. °आत्याश्च । ११ क. तौडिके° । ख. तोण्डिके° । १२ क. च । भार° । १३ ख. °षमष्टतपो वि° । १४ क. °णां लोकधारणहेतवः । भू° । १५ ख. लोकांस्तार° । १६ ख. वा । १७ क्रोष्टुवंशं । १८ ख. ग. श्रुत्वैनं ।

केदारे चैव राजेन्द्र कपिलस्य महात्मनः । ब्रह्माणमभिगम्याथ शुचिः प्रयतमानसः ॥ ६८
सर्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते । कपिष्ठलस्य केदारं समासाद्य सुदुर्लभम् ॥ ६९
अन्तर्धानमवाप्नोति तपसा दग्धकिल्बिषः । ततो गच्छेत राजेन्द्र सेवकं लोकविश्रुतम् ॥ ७०
कृष्णपक्षे चतुर्दश्यामभिगम्य वृषध्वजम् । लभते सर्वकामानिह स्वर्गलोकं च गच्छति ॥ ७१
तिस्रः कोट्यश्च तीर्थानां सैवरे(?)कुरुनन्दन । रुद्रकोट्यां तथा कूपे ह्रदेषु च समन्तकः ॥ ७२
इलास्पदं च तत्रैव तीर्थं भरतसत्तम । तत्र स्नात्वाऽर्चयित्वा च दैवतानि पितॄनपि ।
न दुर्गतिमवाप्नोति वाजपेयं च विन्दति ॥ ७३
किंदाने च नरः स्नात्वा किंयज्ञे च महीपते । अप्रमेयमवाप्नोति दानं यज्ञं तथैव च ॥ ७४
कैलस्यां वार्युपस्पृश्य श्रद्दधानो जितेन्द्रियः । अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ७५
सरकस्य तु पूर्वेण नारदस्य महात्मनः । कुरुश्रेष्ठ शुभं तीर्थं रामजन्मेति विश्रुतम् ॥ ७६
तत्र तीर्थे नरः स्नात्वा प्राणांश्चोत्सृज्य भारत । नारदेनाभ्यनुज्ञातो लोकानाप्नोति दुर्लभान् ॥ ७७
शुक्लपक्षे दशम्यां तु पुण्डरीकं समाविशेत् । तत्र स्नात्वा नरो राजन्पुण्डरीकफलं लभेत् ॥ ७८
ततस्त्रिविष्टपं गच्छेत्त्रिषु लोकेषु विश्रुतम् । तत्र वैतरणी पुण्या नदी पापप्रमोचनी ॥ ७९
तत्र स्नात्वाऽर्चयित्वा च शूलपाणिं वृषध्वजम् । सर्वपापविशुद्धात्मा गच्छेच्च परमां गतिम् ॥ ८०
ततो गच्छेत राजेन्द्र फलेकीवनमुत्तमम् । तत्र देवाः सदा राजन्फलकीवनमाश्रिताः ॥ ८१
तपश्चरन्ति विपुलं बहुवर्षसहस्रकम् । दृषद्वत्यां नरः स्नात्वा तर्पयित्वा च देवताः ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति मानवः ॥ ८२
तीर्थे च सर्वदेवानां स्नात्वा भरतसत्तम । गोसहस्रस्य राजेन्द्र फलमाप्नोति मानवः ॥ ८३
पाणिख्याते नरः स्नात्वा तर्पयित्वा च देवताः । अवाप्नुते राजसूयमृषिलोकं च गच्छति ॥ ८४
ततो गच्छेत धर्मज्ञ मिश्रकं लोकविश्रुतम् । तत्र तीर्थानि राजेन्द्र मिश्रितानि महात्मना ॥ ८५
व्यासेन नृपशार्दूल द्विजार्थमिति नः श्रुतम् । सर्वतीर्थेषु स स्नाति मिश्रके स्नाति यो नरः ॥ ८६
ततो व्यासवनं गच्छेन्नियतो नियताशनः । मनोजवे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ८७
गत्वा मधुवटीं चापि देव्याः स्थानं नरः शुचिः । तत्र स्नात्वाऽर्चयेद्देवान्पितॄंश्च नियतः शुचिः ॥
स देव्या समनुज्ञातो गोसहस्रफलं लभेत् ॥ ८८
कौशिक्याः संगमे यस्तु दृषद्वत्याश्च भारत । स्नातो वै नियताहारः सर्वपापैः प्रमुच्यते ॥ ८९
ततो व्यासस्थली नाम यत्र व्यासेन धीमता । पुत्रशोकाभितप्तेन देहत्यागाय निश्चयः ॥ ९०
कृतो देवैश्च राजेन्द्र पुनरुत्थापितस्तथा । अभिगम्य स्थलीं तस्य गोसहस्रफलं लभेत् ॥ ९१
ऋणान्तं कूपमासाद्य तिलप्रस्थं प्रदाय च । गच्छेत परमां सिद्धिमृणैर्मुक्तो नरेश्वर ॥
वेदीतीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ९२
अहश्च सुदिनश्चैव द्वे तीर्थे तु सुदुर्लभे । तयोः स्नात्वा नरश्रेष्ठ सूर्यलोकमवाप्नुयात् ॥ ९३
मृगधूमं ततो गच्छेत्त्रिषु लोकेषु विश्रुतम् । तत्र रुद्रपदे स्नात्वा समभ्यर्च्य च मानवः ॥ ९४
शूलपाणिं महात्मानमश्वमेधफलं लभेत् । कोटितीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ९५

---

१ ख. ञ. °न्द्र शिवं त्रैलोक्यवि° । २ ङ. च. ढ. सवकं । झ. ट. सर्वकं । ३ ट. °नां सार्धं च कु° । ४ ख. ञ. सर्वो हि·कु°° । ङ. ढ. सवरं । ५ क. °कोटीत° । ६ ख. ञ. °दे पञ्चसमन्तके । ह्र° । ७ ट. कूपस्थ । ८ ख. ञ. शंकरस्य । ९ क. °लद्वीव° । १० क. °लद्वीव° । ११ ख. ञ. °णिखाते । १२ ञ. देवीतीर्थे ।

[ *तस्य दुःखेन मुग्धोऽस्मि तीव्रेणापि सुपीडितः ] । महता मोहजालेन बद्धोऽहं द्विजपुंगव ३१
प्रालपं रामचन्द्रेति शुकराजेति पण्डित । श्लोकराजेति तं विप्र मोहाच्चलितमानसः ॥ ३२
ततोऽहं दुःखसंतप्तः संजातः स्वेन कर्मणा । वियोगेनापि विप्रेन्द्र शुकस्य शृणु सांप्रतम् ॥ ३३
विस्मृतं तन्मया ज्ञानं सिद्धेनापि प्रकाशितम् । संस्मरञ्शुकसंज्ञानं तं शुकं चाटुकारकम् ॥ ३४
वत्स वत्सेति नित्यं वै प्रालपं शृणु भार्गव । गद्यपद्यमयैर्वाक्यैः संस्कृताक्षरसंयुतैः ॥ ३५
त्वां विना कश्च मां वत्स बोधयिष्यति सांप्रतम् । कथाभिस्तु विचित्राभिः पक्षिराज प्रसाद्य माम् ॥
अस्मिन्मुनिर्जनोद्याने विहाय क्व गतो भवान् । केन वै वत्स दोषेण तन्मे कथय सांप्रतम् ॥ ३७
एवंविधैरहं वाक्यैः करुणैस्तैस्तु मोहितः । एवमादि प्रलप्याहं शोकेनापि सुपीडितः ॥ ३८
मृतोऽहं तेन दुःखेन तद्भावेनापि मोहितः । मरणे यादृशो भावो मतिश्चाऽऽसीच्च यादृशी ॥ ३९
तादृशेनापि भावेन जातोऽहं द्विजसत्तम । गर्भवासो मया प्राप्तो ज्ञानस्मृतिविधायकः ॥ ४०
स्मृतं पूर्वकृतं कर्म स्वयमेव प्रचेष्टितम् । मया पापेन मूढेन किं कृतं ह्यकृतात्मना ॥ ४१
गर्भयोगसमारूढः पुनस्तं चिन्तयाम्यहम् । तेन मे निर्मलं ज्ञानं जातं तु सर्वदर्शकम् ॥ ४२
गुरोस्तस्य प्रसादाच्च प्राप्तं ज्ञानमनुत्तमम् । तस्य वाक्योदकैः स्वच्छैः कायस्य मलमेव मे ४३
सबाह्याभ्यन्तरं विप्र क्षालितं निर्मलं कृतम् । तिर्यक्त्वं च मया प्राप्तं शुकजातिसमुद्भवम् ॥ ४४
शुकस्य ध्यानभावेन मरणे समुपस्थिते । तस्मिन्काले मृतो विप्र तद्भावेनापि भावितः ॥ ४५
तादृशोऽस्मि पुनर्जातः शुकरूपो महीतले । मरणे यादृशो भावः प्राणिनां परिजायते ॥ ४६
तादृशाः स्युस्तु सत्त्वास्ते तद्रूपास्तत्पराक्रमाः । तद्गुणास्तत्स्वरूपाश्च भावभूता भवन्ति हि ४७
मृत्युकालस्य विप्रेन्द्रभावेनापि न संशयः । [†अतुलं प्राप्तवाञ्ज्ञानमहमत्र महामते ॥ ४८
तेन सर्वं विपश्यामि यद्भूतं यद्भविष्यति । वर्तमानं महाप्राज्ञ ज्ञानेनापि महामते ॥ ४९
सर्वं विदाम्यहं ह्यत्र संस्थितोऽपि न संशयः ।] तारणाय मनुष्याणां संसारे परिवर्तताम् ॥
नास्ति तीर्थं गुरुसमं बन्धच्छेदकरं द्विज ॥ ५०
एतत्ते सर्वमाख्यातं शृणु भार्गवनन्दन । यत्त्वया पृच्छितं विप्र तत्ते सर्वं प्रकाशितम् ॥ ५१
स्थलजाच्चोदकात्सर्वं बाह्यं मलं प्रणश्यति । जन्मान्तरकृतान्पापान्गुरुतीर्थं प्रणाशयेत् ॥
संसारे तारणायैव जङ्गमं तीर्थमुत्तमम् ॥ ५२

विष्णुरुवाच—

शुक एवं महाप्राज्ञश्च्यवनाय महात्मने । तत्त्वं *प्रकाशयित्वा तु विरराम नृपोत्तम ॥ ५३
[+एतत्ते सर्वमाख्यातं जङ्गमं तीर्थमुत्तमम्] । वरं वरय भद्रं ते यद्वै मनसि वर्तते ॥ ५४

वेन उवाच—

नाहं राज्यस्य कामार्थी नान्यत्किंचित्प्रकामये । सदेहो गन्तुमिच्छामि तव कायं जनार्दन ॥
एवं वरमहं मन्ये यदि दातुमिहेच्छसि ॥ ५५

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च छ. झ. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. च. छ. झ. ट. ठ. ड. पुस्तकस्थः । * इदमार्षम् । + एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

१ क. ख. ङ. च. झ. ढ. °न दग्धो° । २ छ. झ. °स्मिन्मुनिजनो° ।

विष्णुरुवाच—

यज त्वमश्वमेधेन राजसूयेन भूपते । गोभूस्वर्णाम्बुधान्यानां कुरु दानं महामते ॥ ५६
दानान्नश्यति वै पापं ब्रह्मवध्यादिघोरकम् । चतुर्वर्गस्तु दानेन सिध्यत्येव न संशयः ॥ ५७
तस्माद्दानं प्रकर्तव्यं मामुद्दिश्य च भूपते । यादृशेनापि भावेन मामुद्दिश्य ददाति यः ॥ ५८
तादृशं तस्य वै भावं सत्यमेवं करोम्यहम् । ऋषीणां दर्शनात्स्पर्शाद्भ्रष्टस्ते पापसंचयः ॥ ५९
आगमिष्यसि यज्ञान्ते मम देहं न संशयः । एवमाभाष्य तं वेनमन्तर्धानं गतो हरिः ॥ ६०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९००४

---

अथ चतुर्विंशत्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

अन्तर्धानं गते विष्णौ वेनो राजा महामतिः । क्व गतो देवदेवेश इतिचिन्तापरोऽभवत् ॥ १
हर्षेण महताऽऽविष्टश्चिन्तयित्वा नृपोत्तमः । समाहूय पृथुं चैव स्वपुत्रं मधुराक्षरैः ॥ २
उवाच च महाभागो हर्षेण महताऽऽवृतः । त्वया पुत्रेण भूर्लोके तारितोऽस्मि सुपातकात् ॥ ३
नीत उज्ज्वलतां वत्स वंशो मे सांप्रतं पृथो । मया विनाशितो दोषैस्त्वया चैव प्रकाशितः ॥ ४
यजेऽहं चाश्वमेधेन दास्ये दानान्यनेकशः । विष्णुलोकं प्रयास्यामि सकायस्त्वत्प्रसादतः ॥ ५
संभरस्व महाभाग संभारांश्चाप्यनुत्तमान् । आमन्त्रय महाभागान्ब्राह्मणान्वेदपारगान् ॥ ६
एवं पृथुः समादिष्टो वेनेनापि महात्मना । प्रत्युवाच महात्मा स वेनं पितरमादरात् ॥ ७
कुरु राज्यं महाभाग भुङ्क्ष्व भोगान्मनोनुगान् । सुदिव्यान्मानुषान्पुण्यान्यज्ञैर्यज जनार्दनम् ॥ ८
[+एवमुक्त्वा प्रणम्यैनं पितरं ज्ञानतत्परम् ] । धनुरादाय स पृथुः सबाणं यत्नपूर्वकम् ॥ ९
आदिदेश वरान्सर्वान्घोषध्वं भूतले मम । पापमेवं न कर्तव्यं कर्मणा नियमेन वै ॥ १०

---

+एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °ते । दानैर्यज्ञैश्च भूयस्त्वमन्नाद्यैः शुभदायकैः । पश्चादागच्छ मे कायं सुखी भव गतज्वरः । एवमाभाष्य तं वेनमन्तर्धानं गतो हरिः । हर्षेण महताऽऽविष्टो वेनराजा महामतिः । क्व गतो देवदेवेश इति चिन्त्य मुहुर्मुहुः ॥

इति श्रीपद्मपुराणे गुरुतीर्थाख्यानं समाप्तम् ॥

व्यास उवाच—

विष्णुना देवदेवेन समाख्यातमनुत्तमम् । धर्माख्यानं महापुण्यं सर्वपातकनाशनम् । तीर्थानां जङ्गमानां हि सङ्घं प्रत्ययकारकम् । स वेनः किं चकाराथ तन्मे कथय पद्मज ।

ब्रह्मोवाच—

पुनरुवाच जगन्नाथो नारायणो नृपोत्तमम् । यज त्वमश्वमेधेन दद दानं महामते । दानान्नश्यन्ति ते पापा अघोरा गतिनाशकाः । हस्तिहत्यादिका राजंस्तस्माद्दानं प्रदीयते । चतुर्वर्गस्तु दानेन सिध्यते नात्र संशयः । तस्माद्दानं प्रदातव्यं मामुद्दिश्य नरोत्तम । यादृशेनापि भावेन मामुद्दिश्य ददाति यः । तादृशं तस्य भावेन सत्यमेकं करोम्यहम् । ऋषीणां दर्शनात्स्पर्शान्नष्टं ते पातकं नृप । पश्चाद्भवान्समागच्छ गेहं च मम संनिधौ । एवमुक्त्वा हृषीकेशो अन्तर्धानं गतस्ततः । हर्षेण ।

करिष्यति च यः पापमाज्ञां वेनस्य भूपते । उल्लङ्घ्य वध्यतां सोऽपि यास्यते नात्र संशयः॥११
दानमेतं प्रदातव्यं यज्ञैश्चैव जनार्दनम् । यजध्वं मानवाः सर्वे तन्मनस्का विमत्सराः ॥ १२
एवं शिक्षां तु दत्त्वा च राज्यं भृत्येषु वेनजः । निक्षिप्य स गतो विप्रास्तपसोऽर्थे तपोवनम् १३
सर्वान्दोषान्परित्यज्य संयम्य विषयेन्द्रियान् । शतवर्षप्रमाणं वै निराहारो बभूव ह ॥ १४
तपसा तस्य वै तुष्टो ब्रह्मा पृथुमुवाच ह । तपस्तपसि कस्मात्त्वं तन्ममाऽऽचक्ष्व सुव्रत ॥ १५

पृथुरुवाच—

अहो वेनो महाप्राज्ञः पिता मे कीर्तिवर्धनः । [*समाचरति यः पापमस्य राज्ये नराधमः ॥ १६
शिरश्छेत्ता भवत्वेष तस्य देवो जनार्दनः] । अदृष्टैश्च महाचक्रैर्हरिः शास्ता भवेत्स्वयम् ॥ १७
मनसा कर्मणा वाचा कर्तुं वाञ्छन्ति पातकम् । तेषां शिरांसि त्रुट्यन्तु शङ्खवृक्षफलं यथा ॥ १८
एतदेव वरं मन्ये शृणु त्वत्तः सुरेश्वर । प्रजानां दोषभावैश्च न लिप्यति पिता मम ॥ १९
तथा कुरुष्व देवेश यदि भद्रमिहेच्छसि । ददस्व उत्तमं कामं चतुर्मुख नमोऽस्तु ते ॥ २०

ब्रह्मोवाच—

एवमस्तु महाभाग पिता ते पूततां गतः । विष्णुना शासितो वत्स पुत्रेणापि त्वया पृथो॥ २१
एवं पृथुं समुद्दिश्य वरं दत्त्वा गतो विभुः । पृथुश्चापि महाप्राज्ञो राज्यकर्मणि संस्थितः ॥ २२
वैन्यस्य राज्ये विप्रेन्द्राः पापं कश्चिन्न चाऽऽचरेत् । यस्तु चिन्तयते पापं त्रिविधेनापि कर्मणा२३
शिरश्छेदो भवेत्तस्य यथा चक्रैर्निकृन्तितः । तदाप्रभृति वै पापं नैव कोऽपि समाचरेत् ॥ २४
इत्याज्ञा वर्तते तस्य वैन्यस्यापि महात्मनः । सर्वलोकाः समाचारैः परिवर्तन्ति नित्यशः॥ २५
दानभोगैः प्रवर्तन्ते सर्वधर्मपरायणाः । सर्वसौख्यैः प्रवर्धन्ते प्रसादात्तस्य भूपतेः ॥ २६

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९०३०

---

## अथ पञ्चविंशत्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

वेनस्याऽऽज्ञां समाप्राप्य पूतः परमधार्मिकः । संबभार स संभारान्नानापुण्यान्नृपात्मजः ॥ १
निमन्त्र्य ब्राह्मणान्सर्वान्नानादेशोद्भवानथ । अथ वेन इयाजासावश्वमेधेन भूपतिः ॥ २
दानान्यदाद्ब्राह्मणेभ्यो नानारूपाण्यनेकशः । जगाम वैष्णवं लोकं सकायो जगतीपतिः ॥ ३
विष्णुना सह धर्मात्मा नित्यमेव प्रवर्तते । एतद्वः सर्वमाख्यातं चरितं तस्य भूपतेः ॥ ४
सर्वपापोपशमनं सर्वदुःखविनाशनम् । पृथुरेवं स धर्मात्मा राज्यं पृथ्व्याश्चकार ह ॥ ५
त्रैलोक्येन समं पृथ्वीं दुदोह नृपसत्तमः । प्रजाऽनुरञ्जिता तेन पुण्यधर्मानुकर्मभिः ॥ ६
एतत्ते सर्वमाख्यातं भूमिखण्डमनुत्तमम् । प्रथमं सृष्टिखण्डं हि भूमिखण्डं द्वितीयकम् ॥ ७
भूमिखण्डस्य माहात्म्यं कथयिष्याम्यहं पुनः । अस्य खण्डस्य वै श्लोकं यः शृणोति नरोत्तमः॥८

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

---

१ अ. न्तु शङ्ख॰ । ट. ॰न्तु शिशव॰ । घ. ठ. ॰न्तु संशव॰ । २ क. ख. ङ. छ. झ. ड. ढ. पृथुः । ३ ङ. ॰र्मार्थक॰ ।

दिनस्यैकस्य वै पापं तस्य चैव प्रणश्यति । यो नरो भावसंयुक्तो ह्यध्यायं शृणुते सुधीः ॥ ९
तस्य पुण्यं प्रवक्ष्यामि श्रूयतां द्विजसत्तमाः । दत्तस्य गोसहस्रस्य ब्राह्मणेभ्यः सुपर्वणि ॥ १०
यत्फलं तत्प्रजायेत विष्णुश्चैव प्रसीदति । अस्य पद्मपुराणस्य पठमानस्य नित्यशः ॥ ११
कलौ युगे सुविघ्नाश्च जायन्ते तस्य नो कदा ॥ १२

व्यास उवाच—

कस्मात्कलौ प्र(न)जायन्ते शृण्वानस्य च पद्मज । नरस्य पुण्यपकस्य नाना विघ्नाः सुदारुणाः ॥

ब्रह्मोवाच—

प्रवस्याप्यश्वमेधस्य यत्फलं परिकथ्यते । तत्फलं दृश्यते विप्राः पुराणे पद्मसंज्ञके ॥ १४
अश्वमेधमखः पुण्यः कलौ नैव प्रवर्तते । पुराणं चापि यत्तद्वदश्वमेधसमं किल ॥ १५
अश्वमेधस्य यत्पुण्यं स्वर्गमोक्षफलप्रदम् । न भुञ्जन्ति नराः पापाः पापमार्गेषु संस्थिताः ॥ १६
पुराणस्यास्य च फलं पद्मसंज्ञस्य सत्तमाः । अश्वमेधस्य यत्पुण्यं [*स्वर्गमोक्षफलप्रदम् ॥ १७
न भुञ्जन्ति नराः पापाः पापमार्गेषु संस्थिताः । पुराणस्यास्य पुण्यस्य पद्मसंज्ञस्य सत्तम ॥ १८
कलौ युगे नरैः पापैर्गन्तव्यं नरकार्णवम् । तस्माच्छ्रोष्यन्ति तत्पुण्यं] चतुर्वर्गप्रसाधकम् ॥ १९
येन श्रुतमिदं पुण्यं पुराणं पद्मसंज्ञकम् । सर्वं हि साधितं तेन चतुर्वर्गस्य कारणम् ॥ २०
अश्वमेधस्य यज्ञस्य फलं तस्य प्रजायते[†] । शृण्वानस्य नरस्यापि महाविघ्नो न संचरेत् ॥ २१
अश्रद्धा जायते चापि पाठकस्य नरस्य च । लोभश्च जायते तस्य श्रावकस्य द्विजोत्तमाः ॥ २२
प्रेषिता देवदेवेन महामोहाः सुदारुणाः । अकरोत्स विनाशं तु शृण्वतश्चास्य नित्यशः ॥ २३
दूषकाः कुत्सकाः पापाः संभवन्ति दिने दिने । ज्ञातव्यं तु सुशुद्धेन विघ्नरूपं ममाधुना ॥ २४
[*संजातं दृश्यते व्यास तथा होमं समाचरेत् । ] वैष्णवैश्च महामन्त्रैर्विष्णुसूक्तैः सुपुण्यदैः २५
विष्ण्वाराधनमन्त्रेण सहस्रशीर्षकेण च । इदं विष्णुरित्यनेन आब्रह्मेण पुनः पुनः ॥ २६
त्र्यम्बकेण च मन्त्रेण [+होममेव समाचरेत् । बृहत्साम्ना सुमन्त्रेण ] द्वादशाक्षरकेण वा ॥ २७
यस्य देवस्य यो होमस्तस्य मन्त्रेण होमयेत् । अष्टोत्तरतिलाज्यैश्च पालाशैः समिधैरपि ॥ २८
विघ्नेशं पूजयेत्पूर्वं शारदां च सुरेश्वरीम् । ग्रहाणामपि कर्तव्यं स्थापनं पूजनं द्विजाः ॥ २९
जातवेदोमहामायां चण्डिकां क्षेत्रनायकम् । तिलैश्च तण्डुलैराज्यैस्तेषामन्नसमुद्भवैः ॥ ३०
एवं होमः प्रकर्तव्यो ब्राह्मणेभ्यो धनार्पणम् । यथासामर्थ्यमेवापि दक्षिणा धेनुसंयुताः ॥ ३१
ततो विघ्नाः प्रणश्यन्ति पुराणं सिद्धिमाप्नुयात् । एवं न कुरुते यस्तु तस्य विघ्नं वदाम्यहम् ३२
तस्याङ्गे जायते रोगो बहुपीडाप्रदायकः । भार्याशोकः पुत्रशोको धनहानिः प्रजायते ॥ ३३
नानाविधान्महारोगान्भुञ्जते नात्र संशयः । यस्य गेहे नास्ति वित्तमुपवासं समाचरेत् ॥ ३४
एकादशीं स संप्राप्य पूजयेन्मधुसूदनम् । उपचारैः षोडशभिर्भावयुक्तेन चेतसा ॥ ३५

*एतच्चिह्नान्तर्गतः पाठः, ङ. छ. झ.ड. ढ. पुस्तकस्थः । †एतदग्रे क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकेषु 'अश्वमेधादयो यज्ञाः कस्मान्नष्टा महामते । कलौ युगे तु ते सर्वे सर्वदा साङ्गसुस्वराः । यः कोऽपि शत्रुसंपन्नः श्रद्धावान्भावतत्परः । श्रोतुमिच्छति धर्मात्मा सपुत्रो भार्यया सह । श्रवणार्थं महाश्रद्धा पूर्वं यत्र प्रजायते' इत्यधिकं दृश्यते । * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ट. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च छ. झ. ढ. पुस्तकस्थः ।

१ क. ख. ङ. ड. ढ योऽन्तरे भा° । २ क. ख. च. प्रायः । घ. छ. ठ. तात । ३ क. ख. ग. घ. ङ. च. छ. ज. झ. ञ. ड. ढ. विष्णोरराटम° ।

ब्राह्मणान्भोजयेद्यस्तु यथावित्तानुसारतः । केशवाय ततो दत्त्वा संकल्प्य हविषाऽन्वितम् ॥ ३६
स्वयं कुर्यात्ततः प्राज्ञो भोजनं सह बान्धवैः । पुत्रैश्च भार्यया युक्तस्ततः सिद्धिमवाप्नुयात् ॥ ३७
पुराणसंहिता पूर्णा श्रोतव्या धर्मतत्परैः । चतुर्वर्गस्य वै सिद्धिर्जायते तस्य नान्यथा ॥ ३८
सपादं लक्षमेकं तु ब्रह्माख्यं पुष्करं शृणु । कृते युगे तु निष्पापाः शृण्वन्ति मनुजा द्विजाः ॥ ३९
लक्षस्यार्धं ततः कृत्स्नं पुराणं पद्मसंज्ञकम् । श्लोकानां तु सहस्राभ्यां द्वाभ्यामेव तथाऽधिकम् ॥ ४०
त्रेतायुगे तथा प्राप्ते शृण्वन्ति मनुजा द्विजाः । चतुर्वर्गफलं भुक्त्वा ते यास्यन्ति हरिं पुनः ॥ ४१
द्वाविंशतिसहस्राणां संहिता पद्मसंज्ञकौ । द्वापरे कथिता विप्र ब्रह्मणा परमात्मना ॥ ४२
द्वादशैव सहस्राणां पद्माख्यां च सुसंहिताम् । कलौ युगे पठिष्यन्ति मानुषा विष्णुतत्पराः ॥ ४३
एकोऽर्थश्चैकभावश्च चतुर्ष्वपि प्रवर्तितः । संहितास्वपि विप्रेन्द्राः शेषाख्यानप्रविस्तरः ॥ ४४
द्वादशैव सहस्राणि नाशं यास्यन्ति सत्तमाः । कलौ युगे तु संप्राप्ते प्रथमं हि भविष्यति ॥ ४५
भूमिखण्डं नरः श्रुत्वा सर्वपापैः प्रमुच्यते । रोगैर्दुःखैः शत्रुभिश्च विमुक्तः सुखमाप्नुयात् ॥ ४६
अन्यत्सर्वं परित्यज्य जपं दानं तथा श्रुतम् । श्रोतव्यं हि प्रयत्नेन पद्माख्यं पापनाशनम् ॥ ४७
प्रथमं सृष्टिखण्डं हि भूमिखण्डं द्वितियकम् । तृतीयं स्वर्गखण्डं च पातालं तु चतुर्थकम् ॥ ४८
पञ्चमं चोत्तरं खण्डं सर्वपापप्रणाशनम् । यः शृणोति नरो भक्त्या पञ्च खण्डान्यनुक्रमात् ॥ ४९
सहस्रगोप्रदानस्य मानवो लभते फलम् । महाभाग्येन लभ्यन्ते पञ्च खण्डानि भूसुराः ॥
श्रुतानि मोक्षदानि स्युः सत्यं सत्यं न संशयः ॥ ५०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

इति श्रीमहामुनिव्यासप्रणीते महापुराणे पाद्मे द्वितीयं भूमिखण्डं समाप्तम् ।

अध्यायानामादितः समष्ट्यङ्काः—१८७

आदितः श्लोकानां समष्ट्यङ्काः—९०८०

---




प्रश्नोपनिषद्दीपिका च, एतत्पुस्तकद्वयमानन्दाश्रमस्थपण्डितैः संशोधितम् । १ ०

९ मुण्डकोपनिषत्सटीकशांकरभाष्योपेता, नारायणविरचिता मुण्डकोपनिषद्दीपिका च, एतत्पुस्तकद्वयमानन्दाश्रमस्थपण्डितैः संशोधितम् । ० १०

१० सगौडपादीयकारिकाथर्ववेदीयमाण्डूक्योपनिषत्सटीकशांकरभाष्योपेता, अहमदाबादनाम्नि नगरे संस्कृताध्यापकैः काथवटे इत्युपाह्वैः रा० रा० 'आबासाहेब इत्येतैः संशोधिता, आनन्दाश्रमस्थपण्डितैः संशोधिता शंकरानन्दविरचिता माण्डूक्योपनिषद्दीपिका च । २ ६

११ ऐतरेयोपनिषत्सटीकशांकरभाष्योपेता, विद्यारण्यविरचिता ऐतरेयोपनिषद्दीपिका च, एतत्पुस्तकद्वयमानन्दाश्रमस्थपण्डितैः संशोधितम् । १ ३

१२ तैत्तिरीयोपनिषत्सटीकशांकरभाष्योपेता, पण्डित वामनशास्त्री इस्लांपूरकर इत्येतैः संशोधिता । शंकरानन्दकृता तैत्तिरीयोपनिषद्दीपिका, तथा विद्यारण्यकृता तैत्तिरीयोपनिषद्दीपिका च, एतत्पुस्तकद्वयमानन्दाश्रमस्थपण्डितैः संशोधितम् । ३ ५

१३ तैत्तिरीयोपनिषद्भाष्यवार्तिकं सुरेश्वराचार्यकृतं सटीकमानन्दाश्रमस्थपण्डितैः संशोधितम् । २ २

१४ छान्दोग्योपनिषत्सटीकशांकरभाष्योपेता, 'आगाशे' इत्युपाह्वैर्बालशास्त्रितनूजैः काशीनाथशास्त्रिभिः संशोधिता । ५ ०

१५ बृहदारण्यकोपनिषत्सटीकशांकरभाष्योपेता, 'आगाशे' इत्युपाह्वैर्बालशास्त्रितनूजैः काशीनाथशास्त्रिभिः संशोधिता । ८ ०

१६ बृहदारण्यकोपनिषद्भाष्यवार्तिकमानन्दगिरिकृतटीकासमेतम् । एतत्पुस्तकम् 'आगाशे' इत्युपाह्वैर्बालशास्त्रितनूजैः काशीनाथशास्त्रिभिः संशोधितम् । तत्र केवलसंबन्धवार्तिकरूपः प्रथमो भागस्तस्य मूल्यम् । ३

१६ प्रथमाध्यायद्वितीयाध्यायरूपो द्वितीयो भागस्तस्य मूल्यम् । ८

( अस्यान्तिमाध्यायचतुष्टयं सांप्रतं मुद्रणावस्थायां वर्तते )

१७ कृष्णयजुर्वेदीयश्वेताश्वतरोपनिषत्सभाष्या तथा च शंकरा

तरोपनिषद्दीपिका, विज्ञानभगवत्कृतं श्वेताश्वतरोपनिषद्विव-
रणम्, एतत्पुस्तकचतुष्टयमानन्दाश्रमस्थपण्डितैः संशोधितम्। २ ४

१८ सौ[redacted]ाणं, लेले इत्युपाह्वैः वे० शा० रा० काशीनाथशास्त्रिभिः
सं[redacted]। ३ ०

१९ [redacted]ः वैराजक्षेत्रनिवासिभिः रा० रा० बापटोपाह्वैः
[redacted]संशोधितः। ३ १२

[redacted]न्मुक्तिविवेकः वे० शा० रा० पणशी-
[redacted]संशोधितः। १ ३

[redacted]नन्दगिरिकृतटीकासंवलित-
[redacted]नि च वे० शा० सं० रा०
[redacted] संशोधितानि। तत्र
प्रथम[redacted]दद्वयं च, इत्येतद्द्वयं प्रथमो
भागस्त[redacted] ६ ०

२१ श्रीमद्द्वैपायन[redacted]यानन्दगिरिकृतटीकासंवलितशां-
करशारीरकभाष्या[redacted]। तेषां च द्वितीयाध्यायान्तिमपादद्वय-
समेततृतीयाध्यायचतुर्थाध्यायरूपो द्वितीयो भागस्तस्य मूल्यम्। ६ ०

२२ विद्यारण्यकृतः श्रीशंकरदिग्विजयो धनपतिसूरिकृतडिण्डिमा-
ख्यटीकयाऽद्वैतराज्यलक्ष्मीटीकान्तर्गतविशेषविभागटिप्पण्या
च समेत आनन्दाश्रमस्थपण्डितैः संशोधितः। ६ ०

२३ भारतीतीर्थमुनिप्रणीतो वैयासिकन्यायमालाविस्तरः, जयपुर-
महाराजाश्रितेन संस्कृतपाठशालाध्यापकेन वे० शा० दाधी-
चपण्डितशिवदत्तेन संशोधितः। १ १२

२४ श्रीमन्माधवप्रणीतो जैमिनीयन्यायमालाविस्तरः जयपुर-
महाराजाश्रितेन संस्कृतपाठशालाध्यापकेन वे० शा०
दाधीचपण्डितशिवदत्तेन संशोधितः। ८ ०

२५ स्कन्दपुराणान्तर्गता सूतसंहिता श्रीमाधवाचार्यकृतटीकोपेता वे०
[redacted]पाह्वैर्वासुदेवशास्त्रिभिः संशोधिता।
[redacted] प्रथमो भागस्तस्य मूल्यम्। ३ ८
[redacted]ता श्रीमाधवाचार्यकृतटीकोपेता
[redacted]शास्त्रिभिः संशोधिता। तस्याश्चतु-
[redacted]विभागस्तस्य मूल्यम्। ४ ४
[redacted] मुद्रणावस्थायां वर्तते )

सांप्रतं मुद्रणावस्थायां वर्तमानानि पुस्तकानि ।

पालकाप्यमुनिविरचितो हस्त्यायुर्वेदग्रन्थः, जयपुरमहाराजाश्रितेन संस्कृतपाठशालाध्यापकेन वे० शा० दाधीचपण्डितशिवदत्तेन संशोधितः।(मुद्रितप्रायः)

धन्वन्तरीयनिघण्टू राजनिघण्टुसहितो भाषाषट्कगतपर्यायशब्दसमेतद्रव्यावलिवर्णानुक्रमकोशसहितः सपरिशिष्टश्च, वे० शा० रा० रा० वैद्योपनामकैर्नारायणशास्त्रिभिः संशोधितः । ( मुद्रितप्रायः )

कुसुमावल्याख्यटीकासंवलितो वृन्दमाधवः ।

---

एतत्स्थूलवर्णपङ्क्तेरधो यानि पुस्तकानि क्रमशः प्रदत्तानि सन्ति, तान्यस्माभिः सांप्रतं संशोध्यन्ते । अतस्तानि पुस्तकान्येष्वन्यतमं वा यस्य कस्यापि सकाशे स्याच्चेत्, तर्हि तेनावश्यमस्मत्सकाशं प्रेषणीयम् । तेनास्मदुपरि तस्य महत्युपकृतिः स्यात् । वयमपि तस्य तत्पुस्तकं शोधनमुद्रणानन्तरं मुद्रितपुस्तकसमेतं प्रेषयिष्यामः ।

श्रीशार्ङ्गदेवकृतः संगीतरत्नाकरश्चतुरकल्लिनाथविरचितटीकासमेतः ।

वराहमिहिरविरचिता बृहत्संहिता भट्टोत्पलकृतटीकासमेता ।

अपरार्ककृतटीकासमेता याज्ञवल्क्यस्मृतिः ।

तैत्तिरीयशाखीयानां संहिताब्राह्मणारण्यकानि श्रीमत्सायणाचार्यकृतभाष्यसमेतानि ।

विद्यारण्यकृता छान्दोग्योपनिषद्दीपिका बृहदारण्यकोपनिषद्दीपिका च ।

नित्यानन्दकृता बृहदारण्यकोपनिषन्मिताक्षरा ।

अष्टादशपुराणान्तर्गतं ब्रह्मपुराणम् ।

तथा नानाविधाः शतसंख्यामिता उपनिषदश्च ।

( इत्येतानि पुस्तकानि सांप्रतं संशोध्यन्ते )

भवति । यदा च द्वित्रमासैर्ग्रन्थः परिपूर्णो भवति तदैव सर्वेभ्यो ग्राहकेभ्यो दीयते । नियतग्राहकेभ्य आनन्दाश्रमस्थमुद्रितशतपृष्ठानां मूल्यं द्वादशाणका गृह्यन्ते । तेषां पुस्तकप्रेषणार्थं धनव्ययो नैव भवति । अनियतग्राहकेभ्यस्तु शतपृष्ठानां मूल्यमेको रूपकः । पुस्तकप्रेषणार्थं धनं च गृह्यते । पुस्तकमूल्यग्रहणं पुस्तकप्रेषणात्पूर्वं पश्चाद्वा न, किंतु पुस्तकप्रापणसमय एव । नियतानियतग्राहकेभ्यः पुस्तकानि व्हाल्युपेबलपोष्टमार्गेण प्रेष्यन्ते ।

केवलदशोपनिषदां पुस्तकान्यपि सदैवास्माभिर्दीयन्ते, तेषां मूल्यं सार्धैकविंशतिरूपकाः सन्ति, तथा दशोपनिषदः, अधिकरणमालासमेतशारीरशांकरभाष्यं चेति प्रस्थानद्वयमपि सदैव दीयते तस्य मूल्यं त्रयस्त्रिंशद्रूपकाः । पुस्तकप्रेषणार्थं धनं तु ग्राहकसकाशादेव गृह्यते । पुस्तकानि व्हाल्युपेबलपोष्टमार्गेण प्रेष्यन्ते । तस्य धनव्ययोऽपि ग्राहकसकाशादेव गृह्यते ।

एतद्ग्रन्थावलीगतपुस्तकग्रहणेच्छुभिः पुण्यपत्तनस्थानन्दाश्रममुद्रणालये, अथवा मुंबापुर्यां श्री० रा०रा० 'महादेव चिमणाजी आपटे' इत्येतेषां गृहे तथा तत्रैव मुंबापुर्यां 'ज्येष्ठाराम मुकुंदजी' इत्येतेषां रामवाडीसंज्ञकचतुष्पथस्थितपुस्तकविक्रयणालये पत्रं प्रेषणीयम् । परं च केवलदशोपनिषत्पुस्तकग्रहणेच्छुभिः प्रस्थानद्वयग्रहणेच्छुभिश्च, आनन्दाश्रममुद्रणालये वाऽस्मद्गृह एव पत्रं प्रेषणीयम् । ग्राहकाणां पत्रप्रापणसमय एवाविलम्बेन पुस्तकक्रयणनियुक्तजनेभ्यः पुस्तकप्रेषणं भविष्यति ।

महादेव चिमणाजी आपटे,
बी. ए. एल्. एल्. बी.,
मुंबई युनिव्हर्सिटीचे फेलो, व मुंबई हायकोर्टाचे वकील.

---




ॐ तत्सद्ब्रह्मणे नमः ।

महामुनिश्रीमद्व्यासप्रणीतं

# पद्मपुराणम् ।

( तत्र तृतीयं ब्रह्मखण्डं चतुर्थं पातालखण्डं चेत्येतद्द्वयरूपो द्वितीयो भागः )

एतत्पुस्तकं कै० श्री० रावसाहेब मण्डलीकेत्युपनामधारिभिः
विश्वनाथ नारायण इत्येतैः
महता परिश्रमेण बहुतराणि पुस्तकानि मेलयित्वा
सपाठान्तरनिर्देशं संशोधितम् ।



तच्च

महादेव चिमणाजी आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८१५

खिस्ताब्दाः १८९४



मूल्यं समग्रग्रन्थस्य चतुर्विंशतिरूपकाः ।

# अथ पद्मपुराणान्तर्गताध्यायविषयानुक्रमः ।

## तत्र तृतीयं ब्रह्मखण्डम् ।


[…]ं प्रति शौनकस्य कलिकाललब्धजन्मजनोद्धरणोपायनिरूपणप्रश्नः, सूतशौनकसंवादारम्भः, व्यासजैमिनिसंवादारम्भः, हरिभक्तिवर्णनम्, विष्णुभक्तमहिमवर्णनम्, वैष्णवलक्षणनिरूपणम् ... ... १

[…]ासजैमिनिसंवादे हरिमन्दिरलेपनमार्जननियममहिमवर्णनप्रसङ्गेन दण्डकाख्यचौरचरित्रनिरूपणम् ... २

[…]ासजैमिनिसंवादे—**कार्तिकमाहात्म्यारम्भः,** कार्तिकव्रतविहितविविधनियमनिरूपणम्, दीपदानमाहात्म्यवर्णनप्रसङ्गेन वैकुण्ठाख्यविप्रचरितम्, दीपप्रबोधनोत्थपुण्येनाखोरुद्धरणम् ... ... ३

[…]नारदसंवादे—**जयन्तीव्रतमहिमवर्णनारम्भः,** जयन्तीषट्कनिरूपणम्, जयन्तीव्रतपुण्यफलवर्णनम्, जयन्तीव्रतकर्तॄणां पूर्वेषां नामानि, जयन्तीदिवसे भोजननिषेधः, जयन्तीव्रतस्य व्रतकर्तॄणां च माहात्म्यवर्णनम् ... ... ... ... ... ... ४

[…]रदस्य ब्रह्माणं प्रति स्त्रीणामपुत्रात्ववन्ध्यात्वदुहितृप्रसूत्वनपुंसकसंततित्वमृतवत्सात्वदोषप्राप्तिकारणप्रश्नः सुपुत्रप्राप्तिसाधनप्रश्नश्च, पूर्वजन्मकृतविविधदुष्कर्मविपाककथनम्, तत्प्रसङ्गेनापुत्रस्य श्रीधरनाम्नो द्विजस्य चरितनिरूपणम् ... ... ५

[…]ष्णुब्राह्मणयोर्मन्दिरदानमाहात्म्यवर्णनम्, हरिमन्दिरचूर्णलेपदानमाहात्म्यवर्णनप्रसङ्गेन वारनारीचरितनिरूपणम्... ... ... ... ... ... ... ६

[…]ाधाजन्माष्टमीमहिमवर्णनम्,** राधाष्टमीव्रतप्रभावात्कलावतीनाम्न्या वारनार्याः समुद्धारः, भाद्रसिताष्टम्यां वृषभानुयज्ञभूमौ राधाजनननिरूपणम् ... ... ... ... ... ... ... ७

[…]ूतशौनकसंवादे—**समुद्रमथनकथारम्भः,** इन्द्रं प्रति दुर्वाससः शापः, विष्ण्वाज्ञया देवानां समुद्रमथनोपक्रमः ... ... ... ... ... ... ८

[…]ूर्मरूपेण हरिणा गिरेरुद्धरणम्, कालकूटविषोद्भवः, हरेण विषप्राशनम्, अलक्ष्म्या उत्पत्तिर्देवैस्तस्यै निवसतिस्थानप्रदानं च ... ... ... ९

ऐरावतादीनां जन्म, द्वादश्यां प्रातर्महालक्ष्मीप्रादुर्भावः, अलक्ष्म्युद्दालकविवाहानन्तरं विष्णुना महालक्ष्मीपरिणयनम्, पीयूषोद्गमः, विष्णुना मोहिनीरूपधारणम्, विष्णुना राहोश्चक्रेण शिरःकर्तनम्, चन्द्रसूर्योपरागे स्नानदानादिपुण्यफलवर्णनम्, **समुद्रमथनकथासमाप्तिः** ... ... ... ... ... १०

शौनकं प्रति सूतेन मार्गसितगुरुवासरे कर्तव्यलक्ष्मीप्राप्तिकर **गुरुवारव्रतनिरूपणम्,** तत्प्रसङ्गेन भद्रश्रवसो राज्ञस्तद्दुहितुः श्यामबालायाश्चरित्रनिरूपणम् ... ११

ब्राह्मणप्राणरक्षणजनितपुण्यमहिमवर्णनप्रसङ्गेन दीननाथराज्ञश्चरितनिरूपणम्, दीननाथेन गालवं प्रति पुत्रप्राप्तिसाधननिरूपणप्रश्नः, गालवेन दीननाथराज्ञो नरमेधयज्ञनिरूपणम् ... ... ... ... ... १२

**कृष्णजन्माष्टमीव्रतमाहात्म्यवर्णनम्,** दिलीपवासिष्ठसंवादे श्रीकृष्णजन्मकथनम्, संक्षेपतः श्रीकृष्णबाल्यचरितनिरूपणम्, जन्माष्टमीशास्त्रार्थः, चित्रसेनराज्ञश्चरितनिरूपणम्, जन्माष्टमीव्रतप्रभावाच्चित्रसेनोद्धारः ... ... ... ... ... ... १३

ब्राह्मणमहिमवर्णनम्, विप्रपादोदकमहिमवर्णनप्रसङ्गाद्भीमनाम्नः शूद्रस्य चरितवर्णनम्... ... ... १४

**एकादशीमाहात्म्यवर्णनम्,** एकादश्यामन्नभक्षणे महादोषवर्णनम्, एकादशीशास्त्रार्थः, एकादशीमाहात्म्यवर्णनप्रसङ्गेन वल्लभाख्यवैश्यस्य तत्पत्न्या महारूपानाम्न्याश्च चरित्रनिरूपणम् ... ... १५

पौर्णमास्यां विष्णुपूजनव्रतम्, आश्विनपौर्णमास्यां विष्णवे लाजादिसमर्पणमहिमवर्णनम्, तत्प्रसङ्गेन कालद्विजाख्यशूद्रचरितनिरूपणम् ... ... ... १६

सूतशौनकसंवादे हरिचरणवारिमहिमवर्णनम्, तत्प्रसङ्गेन सुदर्शननाम्नो विप्रस्य चरितनिरूपणम् ... १७

सूतशौनकसंवादेऽगम्यागमनजनितदुरितवारणप्रायश्चित्तवर्णनम् ... ... ... ... ... ... १८

सूतशौनकसंवादेऽभक्ष्यभक्षणप्रायश्चित्तनिरूपणम् ... १९

**कार्तिकमाहात्म्यारम्भः,** कार्तिके विविधनिय-

मनिरूपणम्, कार्तिके राधादामोदरार्चनमहिमवर्णनम्, तत्प्रसङ्गेन शंकराख्यवृषलस्य तत्पत्न्याः कलिप्रियायाश्चरित्रनिरूपणम् ... ... ... ... २०
कार्तिकमासव्रतविधिनिरूपणं नानाविधनियमनिरूपणं च २१
तुलसीधात्र्योर्महिमनिरूपणम्, तुलस्यामुदकसेचनप्रसङ्गेन कस्यचिद्ब्राह्मणस्योद्धारः ... ... ... २२
विष्णुपञ्चकाख्यकार्तिकान्त्यदिनपञ्चकमहिमवर्णनम्, तद्विहितविविधनियमनिरूपणम्, विष्णुपञ्चकप्रभावाद्दण्डकराख्यचौरोद्धरणम्, **कार्तिकमाहात्म्यसमाप्तिः** .... .... .... .... २३
सूतशौनकसंवादे नानाविधदाननिरूपणं तत्फलनिरूपणं च २४
सनत्कुमारनारदसंवादे हरिनाममहिमवर्णनं नामापराधनिरूपणं च, पुराणश्रवणफलनिरूपणम् ... ... २५
सूतशौनकसंवादे प्रतिज्ञापालनपुण्यफलवर्णनं प्रतिज्ञाखण्डनदोषवर्णनं च, तत्प्रसङ्गेन सुन्दराभिधचरितनिरूपणम्, एतत्खण्डश्रवणफलम् ... ... ... २६

# अथ चतुर्थं पातालखण्डम्।

सूतशौनकसंवादः, वात्स्यायनस्य शेषं प्रति रामचरितनिवेदनप्रश्नः, **रामाश्वमेधचरित्रप्रारम्भः,** रावणवधानन्तरं रामस्यायोध्यायां लङ्कातः परावर्तनम्, भरतस्य तरणिं प्रति रामपरावर्तनविषयिका प्रार्थना, ससीतेन रामेण भरतावासनन्दिग्रामदर्शनम् १
स्वागमनवृत्तनिवेदनाय राघवप्रेषितस्य हनूमतो भरतसकाशमागमनम्, श्रीरामभरतसमागमः, पुष्पकारूढस्य सभरतस्य रामस्यायोध्यायामागमनम् ... २
रघुनाथस्यायोध्यायां प्रवेशनम्, मातृदर्शनम्, रामागमपरितुष्टपौरकृतमहोत्साहवर्णनं पौराङ्गनानां संवादश्च ३
रामवियुक्तायाः कौसल्याया विलापवर्णनम्, पुरीप्रवेशानन्तरं मातॄणां दर्शनम्, राममातॄणां संवादः, सुमुहूर्ते रघुनाथराज्याभिषेकः ... ... ... ४
देवकृतरामस्तुतिनिरूपणम्, रामेण देवेभ्यो वरप्रदानम्, रामराज्यस्थितिवर्णनम्, रामेण सीतायास्त्यागः, रामसंसदि कुम्भजन्मनः समागमः ... ... ५
रामकृतोऽगस्तिं प्रति कुशलप्रश्नः, श्रीरामपृष्टेनागस्तिना तं प्रति रावणकुम्भकर्णविभीषणानां जन्मकथनम्, कुबेरजन्म, पुष्पकारूढं धनदं दृष्ट्वा रावणमातू रावणादीनां निर्भर्त्सनम्, मातृसमीपे रावणादिप्रतिज्ञातनिरूपणम्, ... ... ... ... ६
रावणादीनामुग्रतपःपरितुष्टस्य ब्रह्मणो वरप्रदानम्, ब्रह्मलोके रावणाक्रान्तविबुधगमनम्, तैः सह ब्रह्मणः कैलासगमनम्, विबुधसंघसहितयोर्ब्रह्मशिवयोर्वैकुण्ठगमनं विष्णुस्तुतिश्च, स एव त्वं विष्णुरवतीर्ण इति रामं प्रति कुम्भजन्मनो निरूपणम्... ... ७
रावणादिविप्रहननजनितब्रह्महत्यादोषभीतिपरिखिन्नं रामं प्रत्यगस्तिनाऽश्वमेधकरणाय प्रेरणम्, रामेणागस्तिं प्रति हयमेधविधिनिरूपणप्रश्नः ... ... ८
रामं प्रत्यगस्तिनाऽश्वमेधयोग्याश्वलक्षणनिरूपणम्, अगस्तिना रामाश्वशालावलोकनमश्वमेधयोग्याश्वपरीक्षणं च, हयमेधार्थमाकारितस्यर्षिवृन्दस्याऽऽगमः, समागतानृषीन्प्रति वर्णाश्रमधर्मनिरूपणविषये प्रश्नः, ऋषिभी रामं प्रति वर्णाश्रमधर्मनिरूपणम् ... ९
सर्षिसंघस्य रामस्य यज्ञमण्डपागमनम्, रामेण यज्ञदीक्षाग्रहणम्, दिग्विजयार्थं ससैन्यस्य यज्ञीयहयस्य सज्जीकरणम्, स्वर्णपत्नीसहितस्य रामस्य वासिष्ठादिभिः सह कुण्डमण्डपादिकरणम्, अश्वमस्तकस्योपरि स्वमुद्राङ्कितहाटकपत्रबन्धनम्, हयरक्षणार्थं रामस्य शत्रुघ्नं प्रति गमनायाऽऽज्ञा, प्रयाणसमये शत्रुघ्नं प्रति रामस्योपदेशः ... ... ... १०
शत्रुघ्नसमागमे हयरक्षार्थं पुष्कलादीनां प्रेषणं हनूमन्तं प्रति मार्गे शत्रुघ्नरक्षार्थं रामस्योपदेशश्च, शत्रुघ्नेन प्रयाणाय मात्राज्ञाग्रहणम्, रामं प्रति जानकीभ्रातुर्लक्ष्मीनिधेर्विनोदपरसंभाषणम्, प्रयाणसमये शत्रुघ्नस्य शुभशकुनदर्शनम्, प्रयाणसमये भार्यागृहे पुष्कलस्याऽऽगमनम्, पुष्कलस्य भार्यां प्रति सद्वर्तनोपदेशः, पुरात्सपरिवारहयनिर्गमः ... ... ११
पुष्कलपत्न्यास्तं प्रत्युपदेशः, पुष्कलस्य शत्रुघ्नकटकागमनम्, ससैन्यस्य सहयस्य शत्रुघ्नस्याहिच्छत्रापुर्यामागमनम्, अहिच्छत्रापुरीवर्णनम्, **कामाक्षाचरितारम्भः,** सुमन्त्रेण शत्रुघ्नं प्रति कामाक्षाचरितनिवेदनप्रसङ्गेन **सुमदराजश्चरित्रनिवेदनम्,** सुमदतपश्चर्यावर्णनम्, सुमदतपोभङ्गार्थं शक्रेण कामं प्रति प्रेषणम्, कामस्येन्द्रं प्रति गर्वोक्तिः, कामस्य रम्भया सह सुमदतपोवनगमनम्, अप्सरासुमदयोः संभाषणम्, ... ... ... ... १२
रम्भाकामयोर्बलहानिः, सुमदस्य कामाक्षादर्शनं स्तुतिश्च, कामाक्षावरदानम्, सुमदशत्रुघ्नसमागमः, शत्रुघ्नस्याहिच्छत्रापुरीप्रवेशः, सुमदेन रामानुजाय

सर्वस्वसमर्पणम् ... ... ... ... ... १३
सुमदशत्रुघ्नसंवादः, **सुमदचरित्रसमाप्तिः,** सहयस्य शत्रुघ्नस्य च्यवनाश्रमागमनम्, **च्यवनसुकन्याचरितनिरूपणम्,** ... ... ... १४
च्यवनेन स्वप्रियाप्रियपूरणाय विमाननिर्माणम्, विमानवर्णनम्, सुकन्यासहितस्य च्यवनस्य तपोभोगवर्णनम्, ... ... ... ... ... ... १५
शर्यातिसुकन्यासंवादः, शर्यातियज्ञारम्भः, यज्ञे च्यवनेनाश्विनीकुमाराभ्यां भागदानम्, च्यवनेन वज्रप्रहारिणो मघवतो भुजस्तम्भनम्, शर्यातियज्ञसमाप्तिः, हयस्य च्यवनाश्रमागमनम्, हयावलोकनानन्तरं च्यवनाश्रमगतमुनिवृन्दकृतरामप्रशंसावर्णनम्, शत्रुघ्नेन हनूमद्द्वारा रामदर्शनार्थं यज्ञमण्डपे च्यवनमुनिप्रेषणम्... ... ... ... १६
**अश्वस्य वाजीपुरागमनम्,** वाजीपुराधिपेन विमलराज्ञा शत्रुघ्नाय सर्वस्वार्पणम्, नीलपर्वतागमनम्, शत्रुघ्नस्य सुमतिमन्त्रिणं प्रति कोऽयं गिरिरिति प्रश्नः, नीलगिरिमाहात्म्यनिरूपणम्, सुमतिना शत्रुघ्नं प्रति नीलपर्वतमहिमवर्णनप्रसङ्गाद्रत्नग्रीवराजश्चरितनिरूपणम्, ... ... ... १७
रत्नग्रीवं प्रति केनापि विप्रेण नीलगिरिमाहात्म्यनिरूपणम्, नीलगिरिवासपुण्याच्चतुर्भुजत्वप्राप्तिकारणनिरूपणम् ... ... ... ... ... ... १८
नीलगिरियात्राविधिनिरूपणम्, नीलगिरियात्रायां सपरिस्य रत्नग्रीवस्य गमनम् ... ... ... १९
विप्ररत्नग्रीवयोः संवादे गण्डकीमाहात्म्यवर्णनं शालिग्रामशिलामाहात्म्यनिरूपणं च, पुल्कसाख्यशबरचरितनिरूपणम् ... ... ... ... ... २०
रत्नग्रीवेण नीलगिर्यवलोकनम्, रत्नग्रीवकृतं पुरुषोत्तमस्तोत्रम्, केनापि संन्यासिना रत्नग्रीवं प्रति श्वो भविष्यति पुरुषोत्तमदर्शनमिति निरूपणम्... ... २१
रत्नग्रीवेण पुरुषोत्तमावलोकनं पूजनं च, रत्नग्रीवकृता पुरुषोत्तमस्तुतिः, रत्नग्रीवाय चतुर्भुजत्वप्राप्तिर्वैकुण्ठप्राप्तिश्च, नीलगिरिमाहात्म्यश्रवणपठनफलनिरूपणम्, नीलपर्वतनिकटे हयगमनम् ... ... २२
हयस्य **सुबाहुराजश्चक्राङ्कनगरागमनम्,** सुबाहुपुत्रेण दमनाख्येन हयावलोकनं प्रतिबन्धनं च, प्रतापाग्र्यदमनयोर्युद्धवर्णनम्, दमनेन प्रतापाग्र्यवधः ... ... ... ... ... ... २३
दमनपुष्कलयोर्युद्धनिरूपणम्, पुष्कलविजयः... ... २४
रणे ससैन्यस्य सुबाहोर्युद्धायाऽऽगमनम्, सुबाहुसेनापतिना क्रौञ्चव्यूहकरणम् ... ... ... ... २५
सुमतिमन्त्रिणा शत्रुघ्नं प्रति सुबाहुबलनिरूपणम्, लक्ष्मीनिधिसुकेत्वोर्युद्धवर्णनं तयोर्गदायुद्धवर्णनं च, सुकेतोर्वधः ... ... ... ... ... ... २६
चित्राङ्गपुष्कलयोर्युद्धवर्णनम्, चित्राङ्गवधः ... ... २७
चित्राङ्गवधाद्राज्ञः पुत्रशोकवर्णनम्, सुबाहुहनूमद्युद्धवर्णनम्, मूर्छितस्य सुबाहुराज्ञः स्वप्ने रामदर्शनम्, शत्रुघ्नविजयः, सुबाहुशत्रुघ्नसमागमः ... २८—२९
सहयस्य शत्रुघ्नस्य तेजःपुरागमनम्, **ऋतम्भराख्यभूपाख्याननिरूपणम्,** जनकोपाख्याननिरूपणं तेन नरकस्थप्राणिमोचनवर्णनं च ... ३०
जनकस्य नरकदर्शनकारणनिरूपणम्, जाबालिना ऋतम्भराय गोपूजाविधिनिवेदनम्, ऋतम्भरर्तुपर्णयोः समागमः, रामनामस्मरणपूताय राज्ञे धेन्वा वरप्रदानम् ... ... ... ... ... ३१
**सत्यवदाख्याननिरूपणम्,** शत्रुघ्नसत्यवत्समागमः ... ... ... ... ... ... ३२
रावणसुहृदा विद्युन्मालिनाऽश्वापहरणम्, विद्युन्मालीयुद्धवर्णनम्, विद्युन्मालिनो वधनिरूपणम् ... ३३—३४
हयस्याऽऽरण्यकर्षेराश्रमागमनम्, आरण्यकर्षेराख्याननिरूपणम्... ... ... ... ... ... ३५
लोमशेनाऽऽरण्यकाय तिथिवासरक्रमेण रामचरित्रनिरूपणम्... ... ... ... ... ... ३६
आरण्यकमुनेः सायुज्यमुक्तिप्राप्तिकथानिरूपणम् ... ३७
नर्मदाहरदेऽश्वनिमज्जनम्, यमुनाह्रदे शत्रुघ्नाय मोहनास्त्रविद्याप्राप्तिः, यमुनाह्रदे वाहप्राप्तिः ... ... ... ३८
वाहस्य देवपुराख्यवीरमणिनगरं प्रत्यागमनम्, वीरमणिपुत्रेण हयग्रहणम्, शिववीरमणिसंवादः ... ... ३९
शत्रुघ्नाय सुमतिना वीरमणिचरितनिरूपणम्, सैन्यद्वयस्य युद्धोपक्रमः... ... ... ... ... ४०
रुक्माङ्गदपुष्कलयोर्युद्धवर्णनम्, पुष्कलविजयः... ४१—४२
वीरभद्रपुष्कलयुद्धम्, पुष्कलवधः, वीरभद्रशत्रुघ्नयुद्धम्, शत्रुघ्नपराजयः ... ... ... ... ... ४३
हनूमच्छिवयोर्युद्धनिरूपणम्, शिवेन हनूमन्तं प्रति वरदानम्, हनूमता द्रोणाचलानयनम्, मार्गे हनूमद्देवयुद्धम्, मृतसंजीविन्यौषधीलाभस्तस्या रसेन सर्वेषां जीवनं च, शत्रुघ्नस्य शिवात्पराजयः, शत्रुघ्नकृतशोकः, रणे श्रीरामागमनम् ... ... ... ४४
श्रीरामशिवसमागमः, श्रीरामदर्शनात्सर्वेषामानन्दवर्णनं हयप्रस्थानं च ... ... ... ... ४५—४६
हयस्य हेमकूटं प्रति गमनम्, तत्र हयगात्रस्तम्भः, शत्रुघ्नशौनकसमागमः शौनकमुनिना हयस्तम्भकारणनिवेदनम् ... ... ... ... ४७
शत्रुघ्नं प्रति शौनकेन मुनिना विविधकर्मविपाककथनम् हयस्य स्तम्भनान्मुक्तिः ... ... ... ... ४८
**सुरथस्य कुण्डलाख्ये नगरे हयगमनम्,**

सुरथेन हयग्रहणम्, सुरथराज्यस्थितिवर्णनम्, सुरथचरित्रनिवेदनम्... ... ... ... ... ४९
शत्रुघ्नेन सुरथं प्रति दूतप्रेषणविचारः, अङ्गदस्य प्रेषणम् सुरथाङ्गदसंवादः ... ... ... ... ... ५०
चम्पकपुष्कलयोर्युद्धवर्णनम्, पुष्कलबन्धनम्, चम्पकहनूमद्युद्धम्, चम्पकपराजयः, पुष्कलमोचनम्... ...५१
सुरथहनूमत्संवादः, हनूमत्सुरथयोस्तुमुलयुद्धनिरूपणम्, सुरथेन हनूमन्तं प्रति श्रीरामास्त्रेण बन्धनम्, सुरथपुष्कलयुद्धम्, सुरथशत्रुघ्नयुद्धवर्णनं शत्रुघ्नपराजयश्च सुरथविजयः ... ... ... ... ... ५२
सुग्रीवसुरथयोस्तुमुलयुद्धनिरूपणम्, रामास्त्रेण सुग्रीवबन्धनम्, सुरथेन रामपक्षीयाणां सर्वेषां बन्धनं कृत्वा नगरे नयनम्, बन्धनतः स्वमुक्तये हनूमत्कृतरामस्तवः, श्रीरघुनाथागमनम्, सुरथरामसमागमः, सर्वेषां मोचनम्, **वाल्मीकेराश्रमं प्रति हयगमनम्** ५३
लवेनाश्वबन्धनम्, हयरक्षकभुजकृन्तनम् ... ... ५४
शेषप्रश्नाद्वात्स्यायनेन सीतात्यागचरितनिरूपणम्, रामसीतासंवादे दोहदवर्णनम्, रात्रौ रामकीर्तिश्रवणार्थं नगरे चारगमनम्,... ... ... ... ... ५५
रामाय चारै रजकदुरुक्तिनिवेदनम्, रामस्य भाविसीतावियोगजनितमूर्छावर्णनम्, रामभरतसंवादः ५६
सीताया रामवियोगात्मकशापकारणनिरूपणम्, रजकपूर्वजन्मचरितनिरूपणम्,... ... ... ... ५७
भरतायाऽऽज्ञाकरणानन्तरं शत्रुघ्नाय सीतात्यागार्थमाज्ञाकरणम्, शत्रुघ्नरामसंवादः, लक्ष्मणाय सीतात्यागार्थमाज्ञाकरणम्, दोहदपूर्तिमिषेण सीताया वनगमनम्, वने जानक्या गङ्गादर्शनम् ... ... ... ५८
सीतालक्ष्मणसंवादः, लक्ष्मणेन वने त्यागः सीतायाः, सीताशोकनिरूपणम्, सीताया वाल्मीकेराश्रमं प्रति गमनम्, वाल्मीकिना सीतायाः सान्त्वनम्, कुशलवजन्मनिरूपणम् ... ... ... ... ... ५९
शत्रुघ्नसेनानिनः कालजिदाख्यस्य लवस्य च युद्धवर्णनम्, कालजित्सेनानिनो मरणनिरूपणम्... ... ६०
लवपुष्कलयोर्युद्धवर्णनम्, हनूमल्लवयोः संग्रामः, मूर्छितस्य हनूमतो रणे पतनम् ... ... ... ६१
शत्रुघ्नलवयोस्तुमुलसंग्रामवर्णनम्, लवमूर्छनम् ... ६२
लवपतनात्सीताशोकः, कुशस्य वनादाश्रमागमनम्, शत्रुघ्नकुशयोः संग्रामः, शत्रुघ्नमूर्छनावृत्तनिरूपणम् ... ... ... ... ... ... ६३
कुशस्य हनूमत्सुग्रीवाभ्यां सह संग्रामवर्णनं तयोर्बन्धनं च, कुशलवाभ्यां सीतायै युद्धवृत्तनिवेदनं बद्धकपिप्रदर्शनं च, सीताकृतमृतरामसैन्यसंजीवनम्, सीतादेशात्कुशलवाभ्यां शत्रुघ्नपुरतो हयत्यागः ... ६४
हयेन सह शत्रुघ्नादीनामयोध्यायां परावर्तनम्, सुमतिसुमन्त्रिणा रामाय हयनिर्गमनात्परावर्तनपर्यन्तं संजातस्य वृत्तस्य निरूपणम् ... ... ... ... ६५
रामवाल्मीकिसंवादः, सीतानयनाय लक्ष्मणप्रेषणम्, सीतालक्ष्मणसंवादः, सीतादेशाल्लवकुशयोर्लक्ष्मणेन सहायोध्यायामागमनम्, वाल्मीकाज्ञया कुशलवाभ्यां रामचरित्रगानम्, स्वपुत्रज्ञानाद्रामेण तयोः स्वाङ्कारोपणम्, रामायणनिर्माणकारणनिरूपणप्रसङ्गाद्वाल्मीकिपूर्वचरितनिवेदनम्, रामेण सीतास्मरणम्... ६६
सीतानयनाय वने पुनर्लक्ष्मणगमनम्, लक्ष्मणेन सह सीतागमनम्, रामसीतासमागमो यज्ञारम्भश्च, रामाश्वमेधयज्ञवर्णनम् ... ... ... ... ... ६७
रामावभृथस्नानवर्णनम्, **रामाश्वमेधसमाप्तिः**, रामाश्वमेधचरितपठनश्रवणफलनिरूपणम् ... ... ६८
**श्रीकृष्णचरितारम्भः**, वृन्दावनादिषोडशदलात्मकश्रीकृष्णक्रीडाकिञ्जल्कनिरूपणम्, वृन्दावनादिश्रीकृष्णक्रीडास्थलवर्णनम्, श्रीकृष्णसौन्दर्यवर्णनम्, वृन्दावनमाहात्म्यवर्णनम् ... ... ... ६९
श्रीकृष्णपार्षदगणनिरूपणम्, ऋषीणां गोपीत्वप्राप्तिकारणनिरूपणम्, ऋषीणां जन्मान्तरीयपुण्यवर्णनम्, राधामाहात्म्यनिरूपणम्, राधाकृष्णनिकटस्थानेकगोपीवर्णनम्, गोपिकागणमध्यस्थपरब्रह्मश्रीकृष्णस्वरूपवर्णनम् ... ... ... ... ... ... ७०
वृन्दावनमथुरादिक्षेत्रमहिमवर्णनम्, वेणुवृक्षोत्पत्तिकथनम्, गोपानामुत्पत्तिकथनम् ... ... ... ७१
प्रधानश्रीकृष्णवल्लभानां वर्णनम् ... ... ... ७२
मथुरावृन्दावनमहिमवर्णनम् ... ... ... ... ७३
अर्जुनस्य राधालोकदर्शनं स्त्रीत्वप्राप्तिश्च ... ... ७४
नारदस्य राधालोकदर्शनं स्त्रीत्वप्राप्तिश्च ... ... ७५
संक्षेपतः कृष्णचरितवर्णनम् ( असावध्यायोऽप्रासङ्गिकोऽस्त्यवलोकनमनीषा चेदवलोकनीयः ) ... ७६
श्रीकृष्णतीर्थानां वर्णनम्, श्रीकृष्णरूपगुणवर्णनम् ... ७७
शालग्रामनिर्णयनिरूपणम् ... ... ... ... ७८
शालग्राममहिमवर्णनम्, वैष्णवानां तिलकविधिनिरूपणम्, वैष्णवानां विविधनियमनिरूपणम्... ... ७९
कलिसंतारकहरिनाममहिमनिरूपणम्, हरिपूजाविधिनिरूपणम्... ... ... ... ... ... ८०
श्रीकृष्णमन्त्रदीक्षाविधानम्, मन्त्रशब्दार्थनिरूपणम् ... ८१
विस्तरेण मन्त्रदीक्षाविधिकथनम् ... ... ... ८२
श्रीकृष्णस्य वृन्दावने दैनंदिनीयचर्यानिरूपणम्, तत्प्रसङ्गेन राधाविलासादिवर्णनं श्रीकृष्णस्य राधामातृहस्तनिर्मितान्नभोजननियमकारणवर्णनं च, **वृन्दावनमाहात्म्यसमाप्तिः श्रीकृष्णचरितसमाप्तिश्च** .... .... .... .... ८३

**वैशाखमाहात्म्यारम्भः,** वैष्णवधर्मकथनम्, विष्णुध्यानविवेचनम् ... ... ... ... ८४
अम्बरीषनारदसंवादे—भक्तिलक्षणनिरूपणम्, माधवमासमहिमवर्णनम्... ... ... ... ... ८५
माधवमासव्रतविधिनिरूपणम्, वैशाखस्नानमाहात्म्यवर्णनम् ... ... ... ... ... ...८६–८७
पापप्रशमनाख्यस्तोत्रमहिमवर्णनम्, तत्प्रसङ्गेन मुनिशर्माख्यमुनिचरितनिरूपणम्, पापप्रणाशनस्तोत्रनिरूपणम् ... ... ... ... ... ... ८८
वैशाखमासे विविधव्रतनियमनिरूपणम् ... ... ८९
विष्णुपूजाविधिकथनम् ... ... ... ... ९०
माधवमासे माधवपूजाजनितपुण्यमहिमवैभवनिरूपणम्, तत्प्रसङ्गेन ब्राह्मणयमसंवादः ... ... ... ९१
ब्राह्मणयमसंवादे नारकिणां पापनिरूपणं स्वर्गिणां पुण्यनिरूपणं च, तीर्थस्नानपुण्यवर्णनं वैष्णवानां विविधनियमवर्णनं च ... ... ... ...९२–९३
ब्राह्मणयमसंवादे वैशाखमासे विविधनियमव्रतनिरूपणम्, माधवमासस्नानपुण्यमहिमवर्णनप्रसङ्गेन धनधर्माख्यविप्रचरितनिरूपणम् ... ... ... ९४
महीरथराजश्चरित्रकथनम्, महीधरकश्यपसंवादे वैशाखस्नानपुण्यवर्णनं विविधनियमकथनं च ...९५–९६
महीधरयमदूतसंवादे विविधपापपुण्यकथनम्... ... ९७
महीधरदत्तपुण्येन नारकिणां मुक्तिः ... ... ... ९८
विष्णुध्याननिरूपणम्, **वैशाखमाहात्म्यसमाप्तिः** ९९
**अश्वमेधयज्ञात्प्राग्जातरामचरितनिरूपणप्रश्नः,** ब्राह्मणरूपिणः शिवस्य राममन्दिरागमनम्, श्रीरामेण विभीषणबन्धनवार्ताश्रवणम्, पौराणिकलक्षणनिरूपणम्, अष्टादशपुराणनिवेदनम्, पुराणश्रोतृवक्तृनियमकथनम्, पुराणश्रवणविधिनिरूपणं च, पुराणावसरे शकुनदर्शनम्, रामेण विभीषणमोचनम्, विप्रावज्ञाजनिताघजदुःखकथनम् ... ... १००
श्रीरामस्य पुष्पकेण श्रीरङ्गनगरं प्रति गमनम्, रामस्य वैकुण्ठं प्रति गमनम्, तत्र नारायणदर्शनं नारायणरामसंवादश्च, रामलक्ष्मीसंवादः, ततो रामस्य गौतमीतटे भरद्वाजाश्रमागमनम्, श्राद्धदिने श्राद्धकर्तृभोक्तृनियमाः, श्राद्धकालनिर्णयः, श्रीशिवलिङ्गस्थापनपूजनविधिनियमकथनं महिमकथनं च, भस्ममहिमवर्णनम्, भस्ममाहात्म्यकथनप्रसङ्गेन धनंजयाख्यविप्रचरितनिरूपणम्, भस्मस्नानमहिमवर्णनम्... १०१
भस्ममहिमप्रसङ्गात्कस्यचिच्छुनो मुक्तिकथनम्, शुनः पूर्वजन्मचरितनिरूपणम्, सहगमनकर्तृस्त्रीमाहात्म्यवर्णनप्रसङ्गेनाव्ययाचरितवर्णनम् ... ... ... १०२
त्र्यायुषेतिमन्त्रमहिमकथनं सोपाख्यानम् ... ... १०३
भस्मोत्पत्तिकथनम्, भस्मनिर्माणविधिकथनम्, भस्मादानधारणपुण्यकथनम् ... ... ... ... १०४
शिवलिङ्गार्चनमाहात्म्यवर्णनप्रसङ्गेनेक्ष्वाकाख्यविप्रचरित्रनिरूपणम्, शिवलिङ्गार्चननियमकथनम्... ... १०५
अग्निमुखाख्यशिवगणकथानकम्, अग्निमुखवीरभद्रयोः संवादे काराङ्किकाख्यराज्ञः कस्याश्चिद्वेश्यायाश्च चरितनिरूपणम् ... ... ... ... १०६
हरनाममाहात्म्यवर्णनप्रसङ्गेन विधृताख्यराज्ञश्चरितनिरूपणम् ... ... ... ... ... १०७
महेशनाममहिमवर्णनप्रसङ्गेन देवरातसुतायाः कलायाश्चरित्रकथनम्, गौरीकृतसोमवारव्रतनिरूपणम्, शिवनाममाहात्म्यसमाप्तिः ... ... ... ... १०८
पुराणश्रवणमहिमकथनं पौराणिकपूजाविधिकथनं च... १०९
गौतमकृतशिवपूजावर्णनम्, गौतमगृहे बाणादिशिवभक्तानां समागमः, गौतममन्दिरे ब्रह्मविष्णुशिवादिदेवानां समागमः, तत्र विष्णुशिवकृतजलक्रीडावर्णनम्, गौतममन्दिरे सर्वेषां देवानां भोजनम्, हनूमतः शिवभक्तिवर्णनम्, हनूमत्कृतशिवलिङ्गपूजाविधाननिरूपणम्, चतुर्युगधर्मनिरूपणम्, कलियुगे दानमहिमवर्णनं हरिकीर्तनमहिमवर्णनं पुराणश्रवणमहिमविवरणं च, पुराणश्रवणपठनाधिकारिनिरूपणम्, तत्प्रसङ्गेन गौतमाख्यविप्रचरितवर्णनम् पुराणश्रवणपठनकर्तृलक्षणानि, पुराणवाचनक्रमनिरूपणं विधिनिरूपणं च, पौराणिकसत्कारविवरणम्, भारतश्रवणविधिकथनं माहात्म्यकथनं च, पुराणसंख्याकथनं महापुराणोपपुराणनामकथनं च, ... ११०–१११
श्रीरामजाम्बवत्संवादे पुराकल्पीयरामायणकथनम् ... ११२
न्यायार्जितधनसंपादितदेवपूजादिधर्मपुण्यमहिमकथनप्रसङ्गेन मङ्कणसूनोराकथस्य चरित्रनिरूपणम्, श्रीरामकृतकौसल्यामासिकश्राद्धविधिनिरूपणम्, श्राद्धावसरे कस्यचिदतिथेरागमनम्, अतिथिना श्रीरामसीताछलनम्, अन्यायार्जितद्रव्येणेश्वरपूजाकर्तृकिल्बिषजनितदुःखनिरूपणप्रसङ्गेन कस्यचिद्रूपकाख्यराक्षसस्य चरित्रनिरूपणम्, रामशंभुसंवादे उपहतद्रव्यपूजानिषेधकथनम्, तत्प्रसङ्गेन चेकितानिब्राह्मणचरित्रनिरूपणम्, उपहतघण्टाकारणनिरूपणप्रसङ्गेन कस्यचिन्मन्दाख्यस्य चरितकथनम्, पातालखण्डश्रवणफलम्, शिवराघवसंवादश्रवणफलम्, पुराणवक्तृसत्कारनिरूपणम् ... ... ... ११३

॥ श्रीः ॥

महामुनिश्रीव्यासप्रणीतं

# पद्मपुराणम् ।

## तत्र तृतीयं ब्रह्मखण्डम् ।

अथ प्रथमोऽध्यायः ।

शौनक उवाच—

कलौ समागते सूत प्राणिनां केन कर्मणा । उद्धारो वै भवेत्तस्मात्कथयस्व ममाग्रतः ॥

सूत उवाच—

साधु साधु मुनिश्रेष्ठ पुण्यात्मनां वरो भवान् । सर्वेषां च जनानां च शुभवाञ्छो निरन्तरम् ॥ २

एतद्व्यासः पुरा विप्रः सर्वज्ञः सर्वपूजितः । पृष्टो जैमिनिना तं स यदाह शृणु वैष्णव ॥ ३

दण्डवत्प्रणिपत्यासौ व्यासं सर्वार्थपारगम् । गुरुं सत्यवतीसूनुं पप्रच्छ मुनिपुङ्गवः ॥ ४

जैमिनिरुवाच—

कलौ नृणां भवेत्केन मोक्षो वै कथयस्व मे । अल्पेनापि च पुण्येन मर्त्याश्चाल्पायुषो यतः ॥ ५

व्यास उवाच—

साधुसङ्गाद्भवेद्विप्र शास्त्राणां श्रवणं प्रभो । हरिभक्तिर्भवेत्तस्मात्ततो ज्ञानं ततो गतिः ॥ ६

न रोचते कथा भूमौ पापिष्ठाय जनाय वै । वैष्णवी स तु विज्ञेयः पापिष्ठप्रवरो द्विजः ॥ ७

श्रीकृष्णस्य कथां श्रुत्वाऽऽनन्दी भवति वैष्णवः। असत्यां तां तु यो ब्रूयाज्ज्ञेयः स पापिनां गुरुः

यस्मिन्यस्मिन्स्थले विप्र कृष्णस्य वर्तते कथा । तस्मात्तस्माज्जगन्नाथो याति त्यक्त्वा न कर्हिचित्

कृष्णस्य यः कथारम्भे कुर्याद्विघ्नं नराधमः । नरकान्निष्कृतिर्नास्ति मन्वन्तरशतावधि ॥ १०

ये पुराणकथां श्रुत्वा निन्दन्त्युपहसन्ति वै । तेषां करस्था नरका बहुक्लेशकराः सदा ॥ ११

जन्मान्तरार्जितं पापं तत्क्षणादेव नश्यति । श्रीकृष्णचरितं यो वै श्रोतुमिच्छां करोत्यपि ॥ १२

भक्त्या यो वै नरः कुर्याच्छ्रीकृष्णचरितं तथा । न जाने श्रवणे तस्य का गतिर्वा भविष्यति १३

ब्रह्महत्यादिकं पापं परस्त्रीहरणं तथा । सुरापानं तथा स्तेयं सर्वं नश्यति पापिनः ॥ १४

पापं कृत्वा तु यो मर्त्यः पश्चात्पापं निवर्तयेत् । तस्य पापं व्रजेन्नाशमग्निना तूलराशिवत् ॥ १५

श्रीकृष्णचरितं विप्र तिष्ठेद्वै पुस्तकं गृहे । तस्य गृहसमीपं हि नाऽऽयान्ति यमकिंकराः ॥ १६

जैमिनिरुवाच—

वदन्ति वैष्णवान्कांश्च वाञ्छा ब्रूहि गुरो मम । इदानीं तान्समाज्ञातुं तेषां माहात्म्यमुत्तमम् ॥ १७

व्यास उवाच—

यो नरो मस्तके भक्त्या वैष्णवाङ्घ्रिजलं द्विज । करोति सेचनं पापी तीर्थस्नानेन तस्य किम् १८

---

१ झ. पुण्यज्ञानव' । २ अ. 'सद्वार्ता तु ३ झ. 'पं पुराणं नाशयेत्तथा । ४ ज. पुस्तके । ५ ख. ज. झ. सेवनं ।

साधुसङ्गं तु यः कुर्यात्क्षणं वाऽर्धक्षणं द्विज । तस्य नश्यन्ति पापानि ब्रह्महत्यामुखानि च ॥ १९
यत्र यत्र कुले चैव एको भवति वैष्णवः । कुलं तस्य यदा पापैर्युक्तं तन्मोक्षगामि वै ॥ २०
हिंसादम्भकामक्रोधैर्वर्जिताश्चैव ये नराः । लोभमोहपरित्यक्ता ज्ञेयास्ते वैष्णवा द्विज ॥ २१
पितृभक्ता दयायुक्ताः सर्वप्राणिहिते रताः ॥ अमत्सरा वैष्णवा ये विज्ञेयाः सत्यभाषिणः २२
विप्रभक्तिरता ये च परस्त्रीषु नपुंसकाः । [*एकादशीव्रतरता विज्ञेयास्ते च वैष्णवाः] ॥ २३
[†गायन्ति हरिनामानि तुलसीमाल्यधारकाः]। हर्यङ्घ्रिसलिलैः सिक्ता विज्ञेयास्ते च वैष्णवाः २४
श्रोत्रयोर्मस्तके येषां तुलस्याः पर्णमुत्तमम् । कर्हिचिद्दृश्यते विप्र विज्ञेयास्ते च वैष्णवाः ॥ २५
पाखण्डसङ्गरहिता विप्रद्वेषविवर्जिताः । सिञ्चेयुस्तुलसीं ये च ज्ञातव्या वैष्णवा नराः ॥ २६
पूजयन्ति हरिं ये च तुलसीं चार्चयन्ति ये । कन्यादानरता ये च ये वै ह्यतिथिपूजकाः ॥ २७
शृण्वन्ति विष्णुचरितं विज्ञेया वैष्णवा नराः । यस्य गृहे सुप्रतिष्ठेच्छालग्रामशिलाऽपि च ॥ २८
मार्जयन्ति हरेः स्थानं पितृयज्ञप्रवर्तकाः । जने दीने दयायुक्ता विज्ञेयास्ते च वैष्णवाः ॥ २९
परस्वं ब्राह्मणद्रव्यं पश्यन्ति विषवच्च ये । हरिनैवेद्यमश्नन्ति विज्ञेया वैष्णवा जनाः ॥ ३०
वेदशास्त्रानुरक्ता ये तुलसीवनपालकाः । राधाष्टमीव्रतरता विज्ञेयास्ते च वैष्णवाः ॥ ३१
श्रीकृष्णपुरतो ये च दीपं यच्छन्ति श्रद्धया । परनिन्दां न कुर्वन्ति विज्ञेयास्ते च वैष्णवाः ॥ ३२

सूत उवाच—

पृष्टो जैमिनिना व्यास इत्युक्तः स यथाक्रमम् । मयेदं कथ्यते ब्रह्मन्यत्प्रसङ्गाद्गुरुश्रुतम् ॥ ३३
अध्यायं श्रद्धया युक्ता ये शृण्वन्ति नरोत्तमाः । सर्वपापविनिर्मुक्ता यान्ति विष्णोः परं पदम् ३४

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे व्यासजैमिनिसंवादे प्रथमोऽध्यायः ॥ १ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९८३४

---

अथ द्वितीयोऽध्यायः ।

---

सूत उवाच—

शृणु शौनक वक्ष्यामि चान्यधर्मं पुरातनम् । व्यासजैमिनिसंवादं श्रोतृणां पापनाशनम् ॥ १

जैमिनिरुवाच—

कर्मणा हि गुरो केन मन्दिरं जगतीपतेः । याति तत्कथयस्वाद्य नरः पापी च मे प्रभो ॥ २

व्यास उवाच—

श्रीकृष्णमन्दिरे यो वै लेपनं कुरुते नरः । सर्वपापविनिर्मुक्तश्चान्ते याति हरेर्गृहम् ॥ ३
यश्चाम्बुलेपनं कुर्यात्संज्ञया शृणु जैमिने । तस्य पुण्यमहं वच्मि मन्दिरे जगतीपतेः ॥ ४
तत्र यावन्ति पश्यन्ति रजांसि च द्विजोत्तम । तावत्कल्पसहस्राणि स वसेद्विष्णुमन्दिरे ॥ ५
पुराऽऽसीद्दण्डको नाम्ना चौरो लोकभयप्रदः । ब्रह्मस्वहारी मित्रघ्नो युगे द्वापरसंज्ञके ॥ ६
असत्यभाषी क्रूरश्च परस्त्रीगमने रतः । गोमांसाशी सुरापश्च पाखण्डजनसङ्गभाक् ॥ ७

---

* एतच्चिह्नान्तर्गतः पाठो ज. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः च. ज. ढ. पुस्तकस्थः ।

---

१ ढ. °लस्याश्च दलैर्द्विज । क° । २ ज. ढ. °श्चानुले° । ३ ङ. ढ. यानि न प° ।

वृत्तिच्छेदी द्विजातीनां न्यासापहारकस्तथा । शरणागतहन्ता च वेश्याविभ्रमलोलुपः ॥ ८
[*एकदा स द्विजश्रेष्ठ कस्यचिद्विष्णुमन्दिरम् । जगाम हरणार्थाय विष्णोर्द्रव्यं स मूढधीः ॥ ९
अथ द्वारि प्रविश्यासावङ्घ्रिकर्दमसंयुतम्] । प्रोज्झयामास वै निम्ने भूमौ देवगृहस्य च ॥ १०
तेनैव कर्मणा भूमिर्निम्नरिक्ता बभूव ह । लोहस्य च शलाकाभ्यामुद्घाट्यं[1] त्वररं मुदा ॥ ११
प्रविवेश हरेर्गेहं वितानवरशोभितम् । रत्नकाञ्चनदीपालिपरिध्वस्तमहत्तमम् ॥ १२
नानापुष्पसुगन्धाढ्यं नानापत्रसमाकुलम् । सुवासितस्य तैलस्य गन्धेन परिपूरितम् ॥ १३
अनेन हारकेणाथ पर्यङ्के सुमनोहरे । शायितो राधया सार्धं दृष्टः पीताम्बरोऽच्युतः ॥ १४
प्रणम्य राधिकानाथं निष्पापः सोऽभवत्तदा । नेष्याम्यथ न नेष्यामि अनेन किं भवेन्मम १५
सेवां कर्तुमशक्तोऽहं यतश्चोरोऽस्मि सर्वदा । द्रव्येण कार्यमस्तीति तन्नेतुं कृतवान्मनः ॥ १६
पातयित्वांऽशुकं भूमौ कौशेयं कमलापतेः । बबन्ध वस्तुजातं च पाणौ कृत्वा स कम्पितः ॥ १७
विष्णोर्मायापतेश्चाथ तानि सर्वाणि जैमिने । कृत्वा शब्दं सुघोरं च पतितान्यथ भूतले ॥ १८
परित्यज्य सुनिद्रां च धावन्त इति किमहो । आगता बहुशो लोकाश्चौरो द्रव्यं जवेन च ॥ १९
त्यक्त्वा धनं च चौरोऽपि त्रस्तः किंचिज्जगाम ह । दंशितः कालसर्पेण मृतोऽसौ गतकिल्बिषः २०
यमाज्ञया तस्य दूताः पाशमुद्गरपाणयः । आगतास्तं समानेतुं दंष्ट्रिणश्चर्मवाससः ॥ २१
बबन्धुश्चर्मपाशेन निन्युर्दुर्गमवर्त्मना । दृष्ट्वा तं शमनः क्रुद्धः पप्रच्छ सचिवं प्रति ॥ २२

यम उवाच—

अनेन किं कृतं कर्म पापं वा पुण्यमेव वा । समूलं वद हे प्राज्ञ चित्रगुप्त ममाग्रतः ॥ २३

चित्रगुप्त उवाच—

सृष्टानि यानि पापानि विधात्रा पृथिवीतले । कृतान्यनेन मूढेन सत्यमेतन्मयोदितम् ॥ २४
किंत्वाकर्णय लोकेश सुकृतं चास्य वर्तते । मन्येऽहं यमुनाभ्रातः सर्वपापविलोपि तत् ॥ २५

धर्मराज उवाच—

किं पुण्यं वर्ततेऽमात्य वद सारं ममान्तिके । श्रुत्वैवं तद्विधास्यामि यत्र योग्यो भवेदसौ ॥ २६
यमस्य वचनं श्रुत्वा संभयश्चित्रगुप्तकः । कृत्वा हस्ताञ्जलिं प्राह चाऽऽत्मनः स्वामिने द्विज॥२७

चित्रगुप्त उवाच—

हरणार्थं हरेर्द्रव्यं गतोऽसौ पापिनां वरः । प्रोज्झितः कर्दमो राजन्पादयोर्द्वारतो हरेः ॥ २८
बभूव लिप्ता सा भूमिर्विलच्छिद्रविवर्जिता । तेन पुण्यप्रभावेन निर्गतं पातकं महत् ॥
वैकुण्ठं प्रति योग्योऽसौ निर्गतस्तव दण्डतः ॥ २९

व्यास उवाच—

श्रुत्वा स वचनं तस्य पीठं कनकनिर्मितम् । ददौ तस्मै चोपविष्टस्तत्र पूज्यो यमेन सः ॥
ननाम शिरसा तं वै प्रोवाच विनयान्वितः ॥ ३०

यम उवाच—

पवित्रं मन्दिरं मेऽद्य पादयोस्त्वाद्धि रेणुभिः । कृतार्थोऽस्मि कृतार्थोऽस्मि कृतार्थोऽस्मि न संशयः

* एतच्चिह्नान्तर्गतः पाठः च. ज. ढ. पुस्तकस्थः ।

१ क. घ. कृतिच्छेदी । २ ङ. °व्य स रहो मु° । ढ. °व्य सोऽररं मु° । ३ ज. °ज्य तु नि° । ४ ढ. °नं वनं चापि । ५ झ. सर्वे । ६ झ. सभार्यां चित्र° ।

इदानीं गच्छ भोः साधो हरेर्मन्दिरमुत्तमम् । नानाभोगसमायुक्तं जन्ममृत्युनिवारणम् ॥ ३२

व्यास उवाच—

इत्युक्त्वा धर्मराजोऽसौ स्यन्दने स्वर्णनिर्मिते । राजहंसयुते दिव्ये तमारोप्य गतैनसम् ॥ ३३
समस्तसुखदं स्थानं प्रेषयामास चक्रिणः । एवं प्रविष्टो वैकुण्ठे तत्र तस्थौ सुखं चिरम् ॥ ३४
लेपनं ये प्रकुर्वन्ति भक्त्या तु हरिमन्दिरे । तेषां किं वा भविष्यति न जानेऽहं द्विजोत्तम ॥ ३५
य इदं शृणुयाद्भक्त्या पठेद्यो वा समाहितः । कोटिजन्मार्जितं पापं नश्यते न च संशयः ॥ ३६

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे हरिमन्दिरलेपनमाहात्म्यवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९८७०

---

अथ तृतीयोऽध्यायः ।

---

शौनक उवाच—

कार्तिकस्य च माहात्म्यं ब्रूहि सूत ममाग्रतः । तद्व्रतस्य फलं किं वा दोषः किं तदकुर्वतः ॥ १

सूत उवाच—

पुरैकदा मुनिश्रेष्ठ व्यासं सत्यवतीसुतम् । जैमिनिः पृष्टवानेतदारम्भे कथितं मुनिः ॥ २

व्यास उवाच—

तिलतैलं[1] मैथुनं यः शुभदे कार्तिके त्यजेत् । बहुजन्मकृतैः पापैर्मुक्तो याति हरेर्गृहम् ॥ ३
मत्स्यं च मैथुनं यो वै कार्तिके न परित्यजेत् । प्रतिजन्मनि संमूढः शूकरश्च भवेद्ध्रुवम् ॥ ४
कार्तिके तुलसीपत्रैः पूजयेद्वै जनार्दनम् । पत्रे पत्रेऽश्वमेधस्य फलं प्राप्नोति मानवः ॥ ५
कार्तिके मुनिपुष्पैर्यः पूजयेन्मधुसूदनम् । देवानां दुर्लभं मोक्षं प्राप्नोति कृपया हरेः ॥ ६
कार्तिके मुनिशाकं वै योऽश्नाति च नरोत्तमः । संवत्सरकृतं पापं[2] शाकेनैकेन नश्यति ॥ ७
फलं तस्य नरोऽश्नाति चोर्जे यो वै हरिप्रिये । प्रदाय तु हरेर्ब्रह्मन्दृजिनं कोटिजन्मजम् ॥ ८
सुरसं सर्पिषा युक्तं दद्याद्यो हरयेऽपि च । सर्वपापैर्विनिर्मुक्तः स गच्छेद्धरिमन्दिरम् ॥ ९
कार्तिके यो नरो दद्यादेकपद्मं हरावपि । अन्ते विष्णुपदं गच्छेत्सर्वपापविवर्जितः ॥ १०
प्रातःस्नानं नरो यो वै कार्तिके श्रीहरिप्रिये । करोति सर्वतीर्थेषु यः स्नात्वा तत्फलं लभेत् ११
कार्तिके यो नरो दद्यात्प्रदीपं नभसि द्विजः । विप्रहत्यादिभिः पापैर्मुक्तो गच्छेद्धरेर्गृहम् ॥ १२
मुहूर्तमपि यो दद्यात्कार्तिके प्रीतये हरेः । दीपं नभसि विप्रेन्द्र तस्मिंस्तुष्टः सदा हरिः ॥ १३
यो दद्याच्च गृहे दीपं कृष्णस्य सघृतं द्विज । कार्तिके चाश्वमेधस्य फलं स्याद्वै दिने दिने ॥ १४
प्रदीपस्य च माहात्म्यं विशेषमुच्यते मया । निशामय द्विजश्रेष्ठ सेतिहासं समाहितः ॥ १५
पूर्वं त्रेतायुगे विप्रो वैकुण्ठो नामतः शुचिः । यस्य सङ्गप्रभावेन मुक्तो भवति पातकी ॥ १६
एकदा कार्तिके सोऽपि प्रदीपं पुरतो हरेः । दत्त्वा गृहं गतो विप्रो घृतपूर्णं द्विजर्षभ ॥ १७
सर्पिस्तत्खादितुं चाऽऽखुरागतोऽपि प्रदीपतः । यावत्खादितुमारेभे बोधितोऽसौ प्रदीपकः ॥
मूषकोऽग्निभयात्तत्र वेगेनापि पलायितः ॥ १८
आखोश्च सकलं पापं विनष्टं कृपया हरेः । सर्पेण दंशितश्चाऽऽखुः प्राणत्यागं चकार ह ॥ १९

---

१ ज. मत्स्यतैलं । च. ट. मत्स्यं तैलं । २ ठ. °पं क्षणेनै° ।

ततो यमाज्ञया दूताः पाशमुद्गरपाणयः । आगतास्तं समानेतुं बबन्धुश्चर्मरज्जुभिः ॥ २०
यावन्नेतुं मनश्चक्रुः शङ्खचक्रगदाधराः । आगता गरुडारूढा विष्णुदूताश्चतुर्भुजाः ॥ २१
विमानं गगने चैव राजहंसयुतं शुभम् । निर्मितं कनकैः शुद्धैः कामगं कृपया हरेः ॥ २२
पाशं छित्त्वा ततो दूताः प्रोचुस्ते यमकिङ्करान् । विष्णुभक्तोऽप्यसौ मूढा व्यर्थं तु बन्धनं कृतम्॥
गच्छध्वं शमनप्रेष्या यदि वाञ्छाऽस्ति जीवितुम् । श्रुत्वा प्रकम्पितास्ते वै पृच्छन्ति विनयान्विताः
केन पुण्यप्रभावेन युष्माभिर्नीयते पुरम् । असौ विष्णोर्महापापी यूयं तद्वक्तुमर्हथ ॥ २५

विष्णुदूता ऊचुः—

पुरतो वासुदेवस्य प्रदीपबोधनं कृतम् । तेनैव कर्मणा दूता नयामो विष्णुमन्दिरम् ॥ २६
अनिच्छयाऽपि यः कुर्याद्विष्णोर्दीपस्य बोधनम् । कोटिजन्मार्जितं पापं त्यक्त्वा याति हरेर्गृहम्॥
भक्त्या प्रदीपं यो दद्यात्कार्तिके तु हरेर्दिने । तस्य पुण्यं समाख्यातुं न शक्तो हरिणा विना२८
घृतपूर्णप्रदीपं यो भक्त्या दद्याद्धरेर्गृहे । अश्वमेधसहस्रेण तस्य किंवा प्रयोजनम् ॥ २९
अश्वमेधप्रकर्ता यः स्वर्गं याति हरेर्दिने । कार्तिके दीपदाता च स गच्छेद्धरिमन्दिरम् ॥ ३०

व्यास उवाच—

इति श्रुत्वा ततो दूता गतास्ते वै यथाऽऽगताः । विष्णुदूता रथे कृत्वा गतास्तं विष्णुमन्दिरम्॥
विष्णुसांनिध्य एवास्य मन्वन्तरशतं गतम् । ततो मर्त्ये राजकन्या बभूव कृपया हरेः ॥ ३२
पुत्रपौत्रसमायुक्ता चिरं भोगं चकार सा । इतः पुनर्गता सा तु गोलोकं हरिसेवया ॥[१] ३३

सूत उवाच—

भक्त्या शृणोति यो मर्त्यो दीपमाहात्म्यमुत्तमम् । सर्वपापविनिर्मुक्तः स याति विष्णुमन्दिरम् ॥

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे दीपदानमाहात्म्यं नाम तृतीयोऽध्यायः ॥ ३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९९०४

---

## अथ चतुर्थोऽध्यायः ।

---

शौनक उवाच—

जयन्त्याः सूत माहात्म्यं कदा सा क्रियते जनैः । कथयस्व मम त्वं वै[२] पोतः संसारसागरे ॥ १

सूत उवाच—

शृणु विप्र प्रवक्ष्यामि यत्पृष्टो मुनिसत्तम । पुरा ब्रह्मा नारदेन पृष्ट एतत्सुरालये ॥ २

नारद उवाच—

जयन्त्याश्चैव माहात्म्यं कथयस्व पितामह । यच्छ्रुत्वाऽहं गमिष्यामि तद्विष्णोः परमं पदम् ॥ ३

ब्रह्मोवाच—

शृणुष्वावहितो विप्र तवाग्रे कथयाम्यहम् । जयन्त्या उपवासेन विष्णुलोकं स गच्छति ॥ ४
स्मरणात्कीर्तनात्पापं सप्तजन्मार्जितं मुने । जयन्ती दहते चैव किं पुनः सोपवासकृत् ॥ ५
जन्माष्टमी च नवमी चैत्रे मासि सिता शुभा । कृष्णा चतुर्दशी कुम्भे मेषे शुक्ला चतुर्दशी ॥ ६
दुर्गाष्टम्याश्विने शुक्ला द्वादशी श्रवणान्विता । महापुण्या च शुभदा जयन्त्यः षट्प्रकीर्तिताः ॥ ७

---

१ ङ. म. इतिस्मरा गता साध्वी गो° । २ झ. वै यतः संसारशोषणम् । सू° ।

त्यजामि स्वं वपुः श्रीमल्लोकभीत्या च शोकवान्[1] । सर्वदा भ्रातरो मह्यं वाक्यंकरा विचक्षणाः ॥
इदानीं तेऽपि दैवेन प्रतिकूलवचःकराः । कुत्र गच्छामि किं यामि हसिष्यन्ति नृपा भुवि ॥ २५
दुर्यशोलाञ्छितं वै मां कुष्ठिनं रूपवन्नराः । मनोर्वंशे पुरा भूपा जाता जाता गुणाधिकाः ॥ २६
इदानीं मयि जाते तु विपरीतं बभूव तत् । इति संभाषमाणं तं रामभद्रं समीक्ष्य सः ॥ २७
संस्तभ्याश्रूणि विपुलान्युवाच विकलस्वरः । स्वामिन्विषादं मा कार्षीः कथं तव मतिर्हृता ॥२८
सीतामनिन्दितां को नु त्यजति श्रुतवान्भवान् । आकारयामि रजकं परिपृच्छामि तं प्रति ॥२९
कथं त्वया निन्दिता सा जानकी योषितां वरा । तत्र देशे बलात्कश्चिद्बाध्यते न जनोऽल्पकः ॥
तस्मात्तस्य यथा स्वान्ते प्रतीतिः स्यात्तथाऽऽचर । किमर्थं त्यज्यते भीरुः पतिव्रतपरायणा ॥३१
मनसा वचसा नान्यं जानाति जनकात्मजा । तस्मादेनां गृहाण त्वमेतां मा त्यज जानकीम् ॥ ३२
ममोपरि कृपां कृत्वा मदुक्तं संश्रयाऽऽशु तत् । एवं वदन्तं प्रत्यूचे रामः शोकेन कर्षितः ॥
लक्ष्मणं धर्मवाक्येन बोधयंस्त्यजनोद्यमः ॥ ३३

श्रीराम उवाच—

कथं तु मां ब्रवीषि त्वं मा त्यजैनामनिन्दिताम् । लोकापवादात्त्यक्ष्येऽहं जानन्नपि विपापिनीम् ३४
स्वयशःकारणेऽहं स्वं देहं त्यक्ष्यामि शोभनम्[2] । त्वामपि भ्रातरं त्यक्ष्ये लोकवादाद्विगर्हितम् ३५
किमुतान्ये गृहाः पुत्रा मित्राणि वसु शोभनम्[3] । स्वयशःकारणे सर्वं त्यजामि किमु मैथिलीम् ३६
न तथा मे प्रियो भ्राता न कलत्रं न बान्धवाः । यथा मे विमला कीर्तिर्वल्लभा लोकविश्रुता ३७
इदानीं रजको नाद्य प्रष्टव्यो भवति ध्रुवम् । कालेन सर्वं भविता लोकचित्तस्य रञ्जनम् ॥ ३८
आमयो यद्वदामस्तु न चिकित्स्यो भवेत्क्षितौ । स कालेन परीपाकाद्भेषजादेव नश्यति ॥ ३९
तथा कालेन संभावि सांप्रतं मा विलङ्घय[4] । त्यजैनां विपिने साध्वीं मां वा खड्गेन घातय ॥४०
इत्युक्तं वाक्यमाकर्ण्य दुःखितोऽभूत्क्षणं तदा । चिन्तयामास च स्वान्ते लक्ष्मणः शोककर्षितः ॥
पित्राज्ञातो जामदग्न्यो मातरं घातयन्नभूत् । गुरोराज्ञा न वै लङ्घ्या युक्ताऽयुक्ताऽपि सर्वथा ४२
तस्मादेनां त्यजाम्येव रामस्य प्रियकाम्यया । इति संचिन्त्य मनसि भ्रातरं प्रत्युवाच सः ॥ ४३

लक्ष्मण उवाच—

अकृत्यमपि कार्यं वै गुर्वाज्ञां नैव लङ्घयेत् । तस्मात्कुर्वे भवद्वाक्यं यत्त्वं वदसि सुव्रत ॥ ४४
इत्येवं भाषमाणं च लक्ष्मणं प्रत्युवाच सः । साधु साधु महाप्राज्ञ त्वया मे तोषितं मनः ॥ ४५
अद्यैव रात्रौ जानक्या दोहदस्तापसीक्षणे । तन्मिषेण रथे स्थाप्य मोचयैनां महामते ॥ ४६
इत्थं भाषितमाकर्ण्य[5] विशुष्यद्वदनोऽभितः । रुदन्बाष्पकला मुञ्चञ्जगाम स्वनिवेशनम् ॥ ४७
सुमन्त्रं तु समाहूय वचनं तमथाब्रवीत् । रथं मे कुरु सज्जं वै सदश्वाम्बरभूषितम् ॥ ४८
स तद्वाक्यं समाकर्ण्य रथमानीतवांस्तदा । आनीतं तं रथं दृष्ट्वा लक्ष्मणः शोककर्षितः ॥ ४९
परमं दुःखमापन्नः संरुद्ध्य स्यन्दनं वरम् । निश्वसञ्जानकीगेहं प्रतस्थे भ्रातृसेवकः ॥ ५०
गत्वा चान्तःपुरे भ्राता रामस्य मिथिलात्मजाम् । प्रत्यूचे निश्वसन्वाक्यं दुःखपूरपरिप्लुतः ५१

लक्ष्मण उवाच—

मातर्जानकि रामेण प्रेषितो भवनं तव । तापसीः प्रति याहि त्वं दोहदमाप्तिहेतवे ॥ ५२

---

१ ङ. °न् । शोकवन्तो भ्रातरो मे कर्तव्ये मूढचेतसः । इ° । २ झ.ञ. °न्गुद्भूतवि° । ३ ङ. °णि सुहृदस्तथा । स्व° । ४ ख. ग. छ. ञ. ठ. ड. ण. त. थ. द. ध. विलम्बय । ५ ङ. °र्ण्य शुष्यद्वदनपङ्कजः । रु° ।

असम्यक्करणे दोषास्तेषां सर्वेषु वस्तुषु । भोज्यपेयादिकं चैषां नेच्छाप्राप्तिकरं द्विजाः ॥ ६८
पारतन्त्र्यात्समस्तेषु तेषां कार्येषु वै ततः । लोकान्क्लेशेन महतो यजन्ति विनयान्विताः ॥ ६९
द्विजशुश्रूषणेनैव पाकयज्ञाधिकारवान् । +निजं जयति वै लोकं शूद्रो धन्यतरस्ततः ॥ ७०
भक्ष्याभक्ष्येषु नाशा(त्रा)स्ति येषां पापेषु वा यतः । नियमो मुनिशार्दूलास्तेनासौ साध्वितीरितम्
स्वधर्मस्याविरोधेन नरैर्लभ्यं धनं सदा । प्रतिपादनीयं पात्रेषु यष्टव्यं च यथाविधि ॥ ७२
तस्यार्जने महान्क्लेशः पालनेन द्विजोत्तमाः । तथा सद्विनियोगाय विज्ञेयं गहनं नृणाम् ॥ ७३
एभिरन्यैस्तथा क्लेशैः पुरुषा द्विजसत्तमाः । निजाञ्जयन्ति वै लोकान्प्राजापत्यादिकान्क्रमात् + ॥
योषिच्छुश्रूषणाद्भर्तुः कर्मणा मनसा गिरा । एतद्विषयमाप्नोति तत्सालोक्यं यतो द्विजाः ॥ ७५
नातिक्लेशेन महता तानेव पुरुषो यथा । तृतीयं व्याहृतं तेन मया साध्विति योषितः ॥ ७६
एतद्वः कथितं विप्रा यन्निमित्तमिहाऽऽगताः । तत्पृच्छध्वं यथाकाममहं वक्ष्यामि वः स्फुटम् ७७
अल्पेनैव प्रयत्नेन धर्मः सिध्यति वै कलौ । नरैरात्मगुणाम्भोभिः क्षालिताखिलकिल्बिषैः ॥७८
शूद्रैश्च द्विजशुश्रूषातत्परैर्मुनिसत्तमाः । तथा स्त्रीभिरनायासात्पतिशुश्रूषयैव हि ॥ ७९
ततस्त्रितयमप्येतन्मम धन्यतमं मतम् । धर्मसंराधने क्लेशो द्विजातीनां कृतादिषु ॥ ८०
तथा स्वल्पेन तपसा सिद्धिं यास्यन्ति मानवाः । धन्या धर्मं चरिष्यन्ति युगान्ते मुनिसत्तमाः ॥
भवद्भिर्यदभिप्रेतं तदेतत्कथितं मया । अपृष्टेनापि धर्मज्ञाः किमन्यत्क्रियतां द्विजाः ॥ ८२

इति श्रीमहापुराणे आदिब्राह्मे व्यासर्षिसंवादे भविष्यकथनं नामैकोन-
त्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२७६९

---

अथ त्रिंशदधिकद्विशततमोऽध्यायः ।

---

मुनय ऊचुः—

आसन्नं विप्रकृष्टं वा यदि कालं न विद्महे । ततो द्वापरविध्वंसं युगान्तं स्पृहयामहे ॥ १
प्राप्ता वयं हि तत्कालमनया धर्मतृष्णया । आदद्याम परं धर्मं सुखमल्पेन कर्मणा ॥ २
संत्रासोद्वेगजननं युगान्तं समुपस्थितम् । प्रनष्टधर्मं धर्मज्ञ निमित्तैर्वक्तुमर्हसि ॥ ३

व्यास उवाच—

अरक्षितारो हर्तारो बलिभागस्य पार्थिवाः । युगान्ते प्रभविष्यन्ति स्वरक्षणपरायणाः ॥ ४
*अक्षात्रियाश्च राजानो विप्राः शूद्रोपजीविनः । शूद्राश्च ब्राह्मणाचारा भविष्यन्ति युगक्षये ॥ ५
श्रोत्रियाः काण्डपृष्ठाश्च निष्कर्माणि हवींषि च । एकपङ्क्त्यामशिष्यन्ति युगान्ते मुनिसत्तमाः ॥६
अशिष्टवन्तोऽर्थपरा नरा मद्यामिषप्रियाः । मित्रभार्यां भजिष्यन्ति युगान्ते पुरुषाधमाः ॥ ७

---

+ एतदादि प्राजापत्यादिकान्क्रमादित्यन्तं ख. पुस्तके नास्ति । * एतदादि श्लोकत्रयं नास्ति क. पुस्तके ।

---

१ ग. °तः । यजन्ति ये द्विजा लो° । २ ग. °ता द्विजाः । द्वि° । ३ ग. नास्त्यास्ति ये पापे येषु । ४ ग. तच्चास° । ५ ग. °तद्धि सम्यवाप्नोति भर्तृलोकं ततो । ६ ग. योषिताम् । ७ क. °म् । कर्म° । ८ क. °थादप° । ९ क. सर्गे । १० ग. °धर्मध° । ११ ग. °मित्तं वक्तु° । १२ ख. कृतपापाश्च । १३ ख. °ण्डस्पृष्टाश्च । ग. °ण्डस्पृष्टाश्च । १४ ख. °माः । सदा साधुद्रोहप° । १५ क. ख. हरिष्यन्ति ।

राजवृत्तिस्थिताश्चौरा राजानश्चौरशीलिनः । भृत्या ह्यनिर्दिष्टभुजो भविष्यन्ति युगक्षये ॥ ८
धनानि श्लाघनीयानि सतां वृत्तमपूजितम् । अकुत्सना च पतिते भविष्यति युगक्षये ॥ ९
प्रनष्टनासाः पुरुषा मुक्तकेशा विरूपिणः । ऊनषोडशवर्षाश्च प्रसोष्यन्ति तथा स्त्रियः ॥ १०
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः । प्रमदाः केशशूलाश्च भविष्यन्ति युगक्षये ॥ ११
सर्वे ब्रह्म वदिष्यन्ति द्विजा वाजसनेयिकाः । शूद्राभा वादिनश्चैव ब्राह्मणाश्चान्त्यवासिनः॥ १२
शुक्लदन्ता जिताक्षाश्च मुण्डाः काषायवाससः । शूद्रा धर्मं वदिष्यन्ति शाठ्यबुद्ध्योपजीविनः १३
श्वापदप्रचुरत्वं च गवां चैव परिक्षयः । साधूनां परिवृत्तिश्च विद्यादन्तगते युगे ॥ १४
अन्त्या मध्ये निवत्स्यन्ति मध्याश्चान्तनिवासिनः । निर्ह्रीकाश्च प्रजाः सर्वा नष्टास्तत्र युगक्षये ॥
तपोयज्ञफलानां च विक्रेतारो द्विजोत्तमाः । ऋतवो विपरीताश्च भविष्यन्ति युगक्षये ॥ १६
तथा द्विहायना दम्याः कलौ लाङ्गलधारिणः । चित्रवर्षी च पर्जन्यो युगे क्षीणे भविष्यति॥ १७
सर्वे शूरकुले जाताः क्षमानाथा भवन्ति हि । यथा निम्नाः प्रजाः सर्वा भविष्यन्ति युगक्षये
पितृदेयानि दत्तानि भविष्यन्ति तथा सुताः । न च धर्मं चरिष्यन्ति मानवा निर्गते युगे ॥ १९
*ऊषरा बहुला भूमिः पन्थानस्तस्करावृताः । सर्वे ····वाणिकाश्चैव भविष्यन्ति युगक्षये ॥ २०
पितृदायाददत्तानि विभजन्ति तथा सुताः । हरणे यत्नवन्तोऽपि लोभादिभिर्विरोधिनः ॥ २१
सौकुमार्ये तथा रूपे रत्ने चोपक्षयं गते । भविष्यन्ति युगस्यान्ते नार्यः केशैरलंकृताः ॥ २२
निर्वीर्यस्य रतिस्तत्र गृहस्थस्य भविष्यति । युगान्ते समनुप्राप्ते नान्या भार्यासमा रतिः ॥ २३
कुशीलानार्यभूयिष्ठा वृथारूपसमन्विताः । पुरुषाल्पं बहुस्त्रीकं तद्युगान्तस्य लक्षणम् ॥ २४
बहुयाचनको लोको न दास्यति परस्परम् । राजचौराग्निदण्डादिक्षीणः क्षयमुपैष्यति ॥ २५
अफलानि च सस्यानि तरुणा वृद्धशीलिनः । अशीलाः सुखिनो लोके भविष्यन्ति युगक्षये २६
वर्षासु परुषा वाता नीचाः शर्करवर्षिणः । संदिग्धः परलोकश्च भविष्यति युगक्षये ॥ २७
वैश्या इव च राजन्या धनधान्योपजीविनः । युगापक्रमणे पूर्वं भविष्यन्ति न बान्धवाः ॥ २८
अप्रवृत्ताः प्रेक्ष्यन्ति समयाः शपथास्तथा । ऋणं सविनयभ्रंशं युगे क्षीणे भविष्यति ॥ २९
भविष्यत्यफलो हर्षः क्रोधश्च सफलो नृणाम् । अजाश्चापि निरोत्स्यन्ति पयसोऽर्थे युगक्षये॥ ३०
अशास्त्रविहितो यज्ञ एवमेव भविष्यति । अप्रमाणं करिष्यन्ति नराः पण्डितमानिनः ॥ ३१
शास्त्रोक्तस्याप्रवक्तारो भविष्यन्ति न संशयः । सर्वः सर्वं विजानाति वृद्धाननुपसेव्य वै ॥ ३२
न कश्चिदकविर्नाम युगान्ते समुपस्थिते । नक्षत्राणि वियोगानि न कर्मस्था द्विजातयः ॥ ३३
चौरप्रायाश्च राजानो युगान्ते समुपस्थिते । कुण्डीवृषा नैकृतिकाः सुरापा ब्रह्मवादिनः ॥ ३४
अश्वमेधेन यक्ष्यन्ते युगान्ते द्विजसत्तमाः । याजयिष्यन्त्ययाज्यांस्तु तथाऽभक्ष्यस्य भक्षिणः ३५

* अयं श्लोकः क. ख. पुस्तकयोर्नास्ति ।

१ क. °रूपिणः । भृ° । २ क. कलौ युगे । ३ ग. °ष्टचेतनाः पुंसो मु° । ४ क. °शूलिन्यो भ° । ५ ख. °णाश्चे-त्यथा° । ६ ख. °क्लदीक्षाश्रितीष्याश्च । ७ क. °न्तादिनासा च मु° । ८ क. °ठ्यधर्मोप° । ९ ग. विनिवृत्तिश्च । १० क. वत्साः । ११ क. ग. °म्यास्तथा ला° । १२ ग. °लकर्षकाः । चि° । १३ ख. ग. °र्वे चौर° । १४ ख. °ताः स्वल्पेनाथा भ° । १५ क. हि । जमा यथाचारयुता भ° । १६ ख. ग. भजिष्यन्ति । १७ ख. ग. °रणाय भजिष्यन्ति लो° । १८ ख. ग. °धिताः । सौ° । १९ क. °ष्ठानां तैक्ष्ण्यात्क्षय° । २० ख. नीराः । २१ ग. प्रवित्स्यन्ति । २२ क. °र्वं न जा° । २३ क. °नत्र प्रसे° । २४ ग. °रप्रिया° । २५ ग. तदाऽभ° ।

ब्राह्मणा धनतृष्णार्ता युगान्ते समुपस्थिते । भोःशब्दमभिधास्यन्ति न च कश्चित्पठिष्यति ॥ ३६
एकशङ्खास्तथा नार्यो गवेधुकपिनद्धकाः(?) । नक्षत्राणि विवर्णानि विपरिता दिशो दश ॥ ३७
संध्यारागो विदग्धाङ्गो भविष्यति युगक्षये । प्रेषयन्ति पितॄन्पुत्रा वधूः श्वश्रूः स्वकर्मसु ॥ ३८
युगेष्वेवं निवत्स्यन्ति प्रमदाश्च नरास्तथा । अकृत्वाऽग्राणि भोक्ष्यन्ति द्विजाश्चैवाहुताग्नयः ॥ ३९
भिक्षां बलिमदत्त्वा च भोक्ष्यन्ति पुरुषाः स्वयम् । वञ्चयित्वा पतीन्सुप्तान्गमिष्यन्ति स्त्रियोऽन्यतः
न व्याधितान्नाप्यरूपान्नोद्यतान्नाप्यसूयकान् । कृते न प्रतिकर्ता च युगे क्षीणे भविष्यति ॥ ४१

मुनय ऊचुः—

एवं विलम्बिते धर्मे मानुषाः करपीडिताः । कुत्र देशे निवत्स्यन्ति किमाहारविहारिणः ॥ ४२
किंकर्माणः किमीहन्तः किंप्रमाणाः किमायुषः । कां च काष्ठां समासाद्य प्रपत्स्यन्ति कृतं युगम्

व्यास उवाच—

अत ऊर्ध्वं च्युते धर्मे गुणहीनाः प्रजास्तथा । शीलव्यसनमासाद्य प्राप्स्यन्ति ह्रासमायुषः ॥ ४४
आयुर्हान्याबलग्लानिर्बलग्लान्या विवर्णता । वैवर्ण्याद्व्याधिसंपीडा निर्वेदो व्याधिपीडनात् ॥ ४५
निर्वेदादात्मसंबोधः संबोधाद्धर्मशीलता । एवं गत्वा परां काष्ठां प्रपत्स्यन्ति कृतं युगम् ॥ ४६
उद्देशतो धर्मशीलाः केचिन्मध्यस्थतां गताः । किंधर्मशीलाः केचित्तु केचिदत्र कुतूहलाः ॥ ४७
प्रत्यक्षमनुमानं च प्रमाणमिति निश्चिताः । अप्रमाणं करिष्यन्ति सर्वमित्यपरे जनाः ॥ ४८
नास्तिक्यपरताश्चापि केचिद्धर्मविलोपकाः । भविष्यन्ति नरा मूढा द्विजाः पण्डितमानिनः ॥ ४९
तदात्वमात्रश्रद्धेया शास्त्रज्ञानबहिष्कृताः । दाम्भिकास्ते भविष्यन्ति नरा ज्ञानविलोपिताः ॥ ५०
तथा विलुलिते धर्मे जनाः श्रेष्ठपुरस्कृताः । शुभान्समाचरिष्यन्ति दानशीलपरायणाः ॥ ५१
सर्वभक्षाः स्वयंगुप्ता निर्घृणा निरपत्रपाः । भविष्यन्ति तदा लोके तत्कषायस्य लक्षणम् ॥ ५२
कषायोपप्लुते काले ज्ञाननिष्ठाप्रणाशने । सिद्धिमल्पेन कालेन प्राप्स्यन्ति निरुपस्कृताः ॥ ५३
विप्राणां शाश्वतीं वृत्तिं यदा वर्णावरे जनाः । संश्रयिष्यन्ति भो विप्रास्तत्कषायस्य लक्षणम् ॥
महायुद्धं महावर्षं महावातं महातपः । भविष्यति युगे क्षीणे तत्कषायस्य लक्षणम् ॥ ५५
विप्ररूपेण रक्षांसि राजानः कर्णवेदिनः । पृथिवीमुपभोक्ष्यन्ति युगान्ते समुपस्थिते ॥ ५६
निःस्वाध्यायवषट्काराः कुनेतारोऽभिमानिनः । क्रव्यादा ब्रह्मरूपेण सर्वभक्ष्या वृथाव्रताः ॥ ५७
मूर्खाश्चार्थपरा लुब्धाः क्षुद्राः क्षुद्रपरिच्छदाः । व्यवहारोपवृत्ताश्च च्युता धर्माश्च(च्च) शाश्वतात् ॥
हर्तारः पररत्नानां परदारप्रधर्षकाः । कामात्मानो दुरात्मानः सोपधाः प्रियसाहसाः ॥ ५९
तेषु प्रभवमाणेषु जनेष्वपि च सर्वशः । अभाविनो भविष्यन्ति मुनयो बहुरूपिणः ॥ ६०
कलौ युगे समुत्पन्नाः प्रधानपुरुषाश्च ये । कथायोगेन तान्सर्वान्पूजयिष्यन्ति मानवाः ॥ ६१
सस्यचौरा भविष्यन्ति तथा चैलापहारिणः । भोक्ष्यभोज्यहराश्चैव करण्डानां च हारिणः ॥ ६२
चौराश्चौरस्य हर्तारो हन्ता हन्तुर्भविष्यति । चौरैश्चौरक्षये चापि कृते क्षेमं भविष्यति ॥ ६३

---

१ ख. °णा ऋणतृ° । २ ग. दिशादाहो । ३ °गेऽप्येवं । ४ ख. ग. °कृताग्रा° । ५ क कष्टपी° । ६ ख. °पश्यन्ति । ७ क. उद्देशिनो । ८ किंमर्म° । ९ क. °धित्तत्र । ख. °चित्कौतू° । १० क. °णं चरि° । ११ ख. °पराः प्रजाः । ना° । १२ क. °थाऽखिले गत ध° । १३ क. ख. °नविद्याप्र° । १४ ग. °नाः । निखिलेन प्रहीष्य° । १५ ग. °न्ति तत्क° । १६ क. ख. °स्तदा निष्ठा कलेः स्मृता । म° । १७ ग. महाभयम् । १८ ख. कर्मवादि° । १९ क. कुनरा लोभमा° । २० क. ख. मूर्खाः स्वार्थ° । २१ ख. °रिग्रहाः । व्य° । २२ क. °रधान्यानां । २३ ख. आभिमानिनो । २४ क. कृते ।

निःसारे क्षुभिते काले निष्क्रिये संव्यवस्थिते । नरा वनं श्रयिष्यन्ति करभारप्रपीडिताः ॥ ६४
यज्ञकर्मण्युपरते रक्षांसि श्वापदानि च । कीटमूषिकसर्पाश्च धर्षयिष्यन्ति मानवान् ॥ ६५
क्षेमं सुभिक्षमारोग्यं सामर्थ्यं चैव बन्धुषु । उद्देशेषु नरा[2]ः श्रेष्ठा भविष्यन्ति युगक्षये ॥ ६६
स्वयंपालाः स्वयं चौरा[3]ः प्लवसंभारसंभृताः[4][5] । मण्डलैः संभविष्यन्ति देशे देशे पृथक्पृथक् ॥ ६७
स्वदेशेभ्यः परिभ्रष्टा निःसाराः सह बन्धुभिः । नराः सर्वे भविष्यन्ति तदा कालपरिक्षयात् ६८
ततः सर्वे समादाय कुमारान्प्रद्रुता भयात् । कौशिकीं [6]संतरिष्यन्ति नराः क्षुद्भयपीडिताः ६९
अङ्गान्वङ्गान्कलिङ्गांश्च[7] काश्मीरानथ कोशलान्[8] । ऋषिकान्तगिरिद्रोणीः[9] संश्रयिष्यन्ति मानवाः ॥
कृत्स्नं च हिमवत्पार्श्वे कूलं च लवणाम्भसः । विविधं जीर्णपत्रं च वल्कलान्यजिनानि च ॥७१
स्वयं कृत्वा निवत्स्यन्ति तस्मिन्भूते युगक्षये । अरण्येषु च वत्स्यन्ति नरा [10]म्लेच्छगणैः सह ७२
नैव शून्या नैवारण्या[11] भविष्यति वसुंधरा । अगोप्तारश्च गोप्तारो भविष्यन्ति नरा[12]धिपाः[13] ॥ ७३
मृगैर्मत्स्यैर्विहङ्गैश्च श्वापदैः सर्पकीटकैः । मधुशाकफलैर्मूलैर्वर्तयिष्यन्ति मानवाः ॥ ७४
शीर्णपर्णफलाहारा वल्कलान्यजिनानि च । स्वयं कृत्वा निवत्स्यन्ति यथा मुनिजनस्तथा ॥७५
बीजानां[14]म[15]कृत[16]स्नेहा आहताः काष्ठ[17]शङ्कुभिः । अजैडकं[18] खरोष्ट्रं च पालयिष्यन्ति नित्यशः ॥ ७६
नदीस्रोतांसि रोत्स्यन्ति तोयार्थं कूलमाश्रिताः । पक्वान्नव्यवहारेण विपणन्तः परस्परम् ॥ ७७
तनूरुहैर्यथा[19]जातैः संमला[20]न्तरसंभृतैः । बह्वपत्याः प्रजाहीनाः कुलशीलविवर्जिताः ॥ ७८
एवं भविष्यन्ति तदा नराश्चाधर्मजीविनः । हीनो[21] हीनं तथा धर्मं प्रजा समनुवत्स्यति ॥ ७९
आयुस्तत्र च मर्त्यानां परं त्रिंशद्भविष्यति । दुर्बला विषयग्लाना जरा[22]शोकैरभिप्लुताः ॥ ८०
भविष्यन्ति तदा तेषां रोगैरिन्द्रियसंक्षयः । आयुःप्रत्ययसंरोधाद्विषयादु(यैरु) परंस्यते ॥ ८१
शुश्रुषवो भविष्यन्ति साधूनां दर्शने रताः । सत्यं च प्रति[23]रंस्यन्ति व्यवहारोपसंक्षयात् ॥ ८२
भविष्यन्ति च कामानामलाभाद्धर्मशीलिनः । करिष्यन्ति च[24] [25]संस्कारं स्वयं[26] च क्षयपीडिताः ॥
एवं शुश्रूषवो दाने सत्ये[27] प्राण्यभिरक्षणे[28][29] । ततः पादप्रवृत्ते तु धर्मे श्रेयो [30]निपत्स्यते ॥ ८४
तेषां लब्धानुमानानां गुणेषु परिवर्तताम् । स्वादु किंत्विति विज्ञाय धर्म एव च दृश्यते ॥ ८५
यथा हानिक्रमं प्राप्तास्तथा ऋद्धिक्रमं गताः । प्रगृहीते ततो धर्मे प्रप[31]श्यन्ति कृतं युगम् ॥ ८६
साधुवृत्तिः कृतयुगे कषाये हानिरुच्यते । एक एवं[32] तु कालोऽयं हीनवर्णो यथा शशी ॥ ८७
छन्नश्च तमसा सोमो यथा कलियुगं तथा । मुक्तश्च तमसा सोम एवं कृतयुगं च तत् ॥ ८८
अर्थवादः परं ब्रह्म वेदार्थ इति तं विदुः । अ[33]विविक्तमविज्ञातं दार्यां[34]ग्रमिह धार्यते ॥ ८९
इष्टवादस्तपो नाम तपो हि स्थविरीकृतः । गुणैः कर्माभिनिर्वृत्तिर्गुणाः[36] शुध्यन्ति कर्मणा ॥ ९०

---

१ ख. लोके । २ क. ख. नरश्रे° । ३ क. चौरा युगसं° । ४ ख. °राः सुगन्धभा° । ५ क. °संयुताः । ६ ग. संश्रयिष्य° । ७ क. °श्च तथा मगधमेकला° । ८ ख. मेकलान् । ९ क. ऋषीकं ते गि° । ख. ऋषीसत्त्वां गि° । १० क. भिक्षुगणैः । ११ क. न चार° । १२ ग. °रा वृताः । मृ° । १३ ख. °पाः । नरैर्मे° । १४ क. बीजना° । १५ क. ग. °नामाकृतिनिम्नेष्वाह° । १६ ख. °कृतिस्नेहा हन्तुः का° । १७ क. °ष्ठजन्तुभिः । १८ क. अजाण्डजान्खरो° । १९ क. °थायातममलान्तर° । २० ग. समूलोत्तर° । २१ क. °नाधीनं । २२ क. °राक्लेशैर° । २३ ख. °पश्यन्ति । २४ ग. न । २५ ग. संकोचं । °२६ क. स्वपक्षभय° । ख. स्वपक्षक्ष° । २७ क. सत्यप्रा° । २८ क. °रक्षिणः । त° । २९ ग. °णे । चतुष्पदे प्र° । ३० क. विपत्स्यति । ३१ ख. °पत्स्यन्ति । ३२ क. ख. °व चतुष्कालो ही° । ३३ क. ख. °विमुक्त° । ३४ ग. °यादामि° । ३५ ख. °मिव धा° । ३६ ग. °गुणैस्तथ्येन क° ।

आशीस्तु पुरुषं दृष्ट्वा देशकालानुवर्तिनी । युगे युगे यथाकालमृषिभिः समुदाहृता ॥ ९१
धर्मार्थकाममोक्षाणां देवानां च प्रतिक्रिया । आशिषश्च शिवाः पुण्यास्तथैवाऽऽयुर्युगे युगे ॥९२
तथा युगानां परिवर्तनानि[3] चिरप्रवृत्तानि विधिस्वभावात् ।
क्षणं न संतिष्ठति जीवलोकः क्षयोदयाभ्यां परिवर्तमानः ॥ ९३

इति श्रीमहापुराणे आदिब्राह्मे व्यासर्षिसंवादे भविष्यकथनं नाम त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२८६२

---

अथैकत्रिंशदधिकद्विशततमोऽध्यायः ।

---

व्यास उवाच—

सर्वेषामेव भूतानां त्रिविधः प्रतिसंचरः । नैमित्तिकः प्राकृतिकस्तथैवाऽऽत्यन्तिको मतः ॥ १
ब्राह्मो नैमित्तिकस्तेषां कल्पान्ते प्रतिसंचरः । आत्यन्तिको वै मोक्षश्च प्राकृतो द्विपरार्धिकः॥ २

मुनय ऊचुः—

परार्धसंख्यां भगवंस्त्वमाचक्ष्व यथोदिताम् । द्विगुणीकृतयज्ज्ञेयः प्राकृतः प्रतिसंचरः ॥ ३

व्यास उवाच—

स्थानात्स्थानं दशगुणमेकैकं[6] गण्यते द्विजाः । ततोऽष्टादशमे भागे परार्धमभिधीयते ॥ ४
परार्धं द्विगुणं यत्तु प्राकृतः स लयो द्विजाः । तदाऽव्यक्तेऽखिलं व्यक्तं स्वहेतौ लयमेति वै ॥ ५
निमेषो मानुषो योऽयं मात्रामात्रप्रमाणतः । तैः पञ्चदशभिः काष्ठा त्रिंशत्काष्ठास्तथा कला ॥६
नाडिका तु प्रमाणेन कला च(श्च) दश पञ्च च । उन्मानेनाम्भसः सा तु पलान्यर्धत्रयोदश॥ ७
हेममाषैः कृतच्छिद्रा चतुर्भिश्चतुरङ्गुलैः । मागधेन प्रमाणेन जलप्रस्थस्तु स स्मृतः ॥ ८
नाडिकाभ्यामथ द्वाभ्यां मुहूर्तो द्विजसत्तमाः । अहोरात्रं मुहूर्तास्तु त्रिंशन्मासो दिनैस्तथा ॥ ९
मासैर्द्वादशभिर्वर्षमहोरात्र तु तद्दिवि । त्रिभिर्वर्षशतैर्वर्षं षष्ट्या चैवासुरद्विषाम् ॥ १०
तैस्तु द्वादशसाहस्रैश्चतुर्युगमुदाहृतम् । चतुर्युगसहस्रं तु कथ्यते ब्रह्मणो दिनम् ॥ ११
स कल्पस्तत्र मनवश्चतुर्दश द्विजोत्तमाः । तदन्ते चैव भो विप्रा ब्रह्मनैमित्तिको लयः ॥ १२
तस्य स्वरूपमत्युग्रं द्विजेन्द्रा गदतो मम । शृणुध्वं प्राकृतं भूयस्ततो वक्ष्याम्यहं लयम् ॥ १३
चतुर्युगसहस्रान्ते क्षीणप्राये महीतले । अनावृष्टिरतीवोग्रा जायते शतवार्षिकी[10] ॥ १४
ततो यान्यल्पसाराणि तानि सत्त्वान्यनेकशः । क्षयं यान्ति मुनिश्रेष्ठाः[13] पार्थिवान्यतिपीडनात् ॥
ततः स भगवान्कृष्णो रुद्ररूपी तथाऽव्ययः । क्षयाय यतते कर्तुमात्मस्थाः सकलाः प्रजाः ॥१६
ततः स भगवान्विष्णुर्भानोः सप्तसु रश्मिषु । स्थितः पिबत्यशेषाणि जलानि मुनिसत्तमाः ॥१७

---

१ ग. °हृतम् । भ° । २ ग. वेदानां । ३ क. °नि यथा यथा वै प्रकृतिस्व° । ४ क. ख. वर्णानां । ५ ग. °संज्ञां भ° । ६ ग. °मेकस्माद्गण्य° । ७ ग. च । तन्मा° । ८ क °च्छिद्रश्चतु° । ९ क. °र्वर्षं तन्मानं परिकीर्तितम् । शतैस्तैस्तु चतुःषष्ट्या वर्षं वै त्रिदिवौकसाम् । तै° । १० क. °ते दशवा° । ख. °ते वार्षिकी तदा । त° । ११ ग. सर्गाण्यने° । १२ क. °शः । क्षीयन्ते मुनयः श्रे° । १३ क. °श्रेष्ठा अन्नाभावे तु जन्तवः । त° । १४ क. ख. °रूपधरोऽव्य° । १५ क. °वान्कृष्णो भानोः ।

पीत्वाऽम्भांसि समस्तानि प्राणिभूतगतानि वै । शोषं नयति भो विप्राः समस्तं पृथिवीतलम् ॥
समुद्रान्सरितः शैलाञ्शैलप्रस्रवणानि च । पातालेषु च यत्तोयं तत्सर्वं नयति क्षयम् ॥ १९
ततस्तस्यौप्यभावेन तोयाहारोपबृंहिताः । सहस्ररश्मयः सप्त जायन्ते तत्र भास्कराः ॥ २०
अधश्चोर्ध्वं च ते दीप्तास्ततः सप्त दिवाकराः । दहन्त्यशेषं त्रैलोक्यं सपातालतलं द्विजाः ॥२१
दह्यमानं तु तैर्दीप्तैस्त्रैलोक्यं दीप्तभास्करैः । साद्रिनगार्णवाभोगं निःस्नेहमभिजायते ॥ २२
ततो निर्दग्धवृक्षाम्बु त्रैलोक्यमखिलं द्विजाः । भवत्येषा च वसुधा कूर्मपृष्ठोपमाकृतिः ॥ २३
ततः कालाग्निरुद्रोऽसौ भूतसर्गहरो हॅरः । शेषाहिश्वाससंतापात्पातालानि दहत्यधः ॥ २४
पातालानि समस्तानि स दग्ध्वा ज्वलनो महान् । भूमिमभ्येत्य सकलं दग्ध्वा तु वसुधातलम्॥
भुवो लोकं ततः सर्वं स्वर्गलोकं च दारुणः । ज्वालामालामहावर्तस्तत्रैव परिवर्तते ॥ २६
अम्बरीषमिवाऽऽभाति त्रैलोक्यमखिलं तदा । ज्वालावर्तपरीवारमुपक्षीणबलास्ततः ॥ २७
ततस्तापपरीतास्तु लोकद्वयनिवासिनः । कृतावकाशा गच्छन्ति महर्लोकं द्विजास्तदा ॥ २८
तस्मादपि महातापतप्ता लोकास्ततः परम् । गच्छन्ति जनलोकं ते दशावृत्या परैषिणः ॥ २९
ततो दग्ध्वा जगत्सर्वं रुद्ररूपी जनार्दनः । मुखनिःश्वासजान्मेघान्करोति मुनिसत्तमाः ॥ ३०
ततो गजकुलप्रख्यास्तडिद्वन्तो निनादिनः । उत्तिष्ठन्ति तदा व्योम्नि घोराः संवर्तका घनाः ॥
केचिदञ्जनसंकाशाः केचित्कुमुदसंनिभाः । धूम्रवर्णा घनाः केचित्केचित्पीताः पयोधराः ॥ ३२
केचिद्धरिद्रावर्णाभा लाक्षारसनिभास्तथा । केचिद्वैदूर्यसंकाशा इन्द्रनीलनिभास्तथा ॥ ३३
शङ्खकुन्दनिभाश्चान्ये जातीकुन्दनिभास्तथा । इन्द्रगोपनिभाः केचिन्मनःशिलानिभास्तथा ॥ ३४
पद्मपत्रनिभाः केचिदुत्तिष्ठन्ति घना घनाः । केचित्पुरवराकाराः केचित्पर्वतसंनिभाः ॥ ३५
कूटागारनिभाश्चान्ये केचित्स्थलनिभा घनाः । महाकाया महारावा पूरयन्ति नभस्तलम् ॥ ३६
वर्षन्तस्ते महासारास्तमग्निमतिभैरवम् । शमयन्त्यखिलं विप्रास्त्रैलोक्यान्तरविस्तृतम् ॥ ३७
नष्टे चाग्नौ शतं तेऽपि वर्षाणामधिकं घनाः । प्लावयन्तो जगत्सर्वं वर्षन्ति मुनिसत्तमाः ॥ ३८
धाराभिरक्षमात्राभिः प्लावयित्वाऽखिलां भुवम् । भुवो लोकं तथैवोर्ध्वं प्लावयन्ति दिवं द्विजाः॥
अन्धकारीकृते लोके नष्टे स्थावरजङ्गमे । वर्षन्ति ते महामेघा वर्षाणामधिकं शतम् ॥ ४०

इति श्रीमहापुराणे आदिब्राह्मे व्यासर्षिसंवादे संहारलक्षणकथनं नामैक-
त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२९०२

---

अथ द्वात्रिंशदधिकद्विशततमोऽध्यायः ।

---

व्यास उवाच—

सप्तर्षिस्थानमाक्रम्य स्थितेऽम्भसि द्विजोत्तमाः । एकार्णवं भवत्येतत्त्रैलोक्यमखिलं ततः ॥ १
अथ निःश्वासजो विष्णोर्वायुस्ताञ्जलदांस्ततः । नाशं नयति भो विप्रा वर्षाणामधिकं शतम्॥२

---

१ क. ग. °गणानि । २ ख. °स्तस्य तु बीजेन । ३ ग. °स्यानुभा° । ४ ग हरिः । ५ क. ते देशा भृत्या । ६ ग. °मः । अथ निः° । ७ ख. कूपागा° । ८ ग. °टाङ्कार° । ९ ख. पूरयन्तो । १० ग. °हाभागा व° । ११ क. °तः । मुखनि° । १२ ग. °ततो वि° ।

सर्वभूतमयोऽचिन्त्यो भगवान्भूतभावनः । अनादिरादिर्विश्वस्य पीत्वा वायुमशेषतः ॥ ३
एकार्णवे[1] ततस्तस्मिञ्शेषशय्यास्थितः प्रभुः । ब्रह्मरूपधरः [2]शेते भगवानादिकृद्धरिः ॥ ४
जनलोकगतैः सिद्धैः सनकाद्यैरभिष्टुतः । ब्रह्मलोकगतैश्चैव चिन्त्यमानो मुमुक्षुभिः ॥ ५
आत्ममायामयीं दिव्यां योगनिद्रां समास्थितः । आत्मानं वासुदेवाख्यं चिन्तयन्परमेश्वरः ॥ ६
एष नैमित्तिको नाम विप्रेन्द्राः प्रतिसंचरः । निमित्तं तत्र यच्छेते ब्रह्मरूप[3]धरो हरिः ॥ ७
यदा जागर्ति सर्वात्मा स तदा चेष्टते जगत् । निमीलत्येतदाखिलं मायाशय्याशयेऽच्युते ॥ ८
पद्मयोनेर्दिनं यत्तु चतुर्युगसहस्रवत् । एकार्णवकृते लोके तावती रात्रिरुच्यते ॥ ९
ततः प्रबुद्धो रात्र्यन्ते पुनः सृष्टिं करोत्यजः । ब्रह्मस्वरूपधृग्विष्णुर्यथा वः कथितं पुरा ॥ १०
इत्येष कल्पसंहारो अन्तरप्रलयो द्विजाः । नैमित्तिको वः कथितः शृणुध्वं प्राकृतं परम् ॥ ११
अवृष्ट्यग्न्यादिभिः सम्यक्कृते शय्यालये द्विजाः । समस्तेष्वेव लोकेषु पातालेष्वखिलेषु च ॥ १२
महदादेर्विकारस्य विशेषात्तत्र [10]संक्षये । कृष्णेच्छाकारिते तस्मिन्प्रवृत्ते प्रतिसंचरे ॥ १३
आपो ग्रसन्ति वै पूर्वं भूमेर्गन्धादिकं गुणम् । [13]आत्तगन्धा ततो भूमिः प्रलयाय प्रकल्पते ॥ १४
प्रनष्टे गन्धतन्मात्रे भवत्युर्वी जलात्मिका । आपस्तदा प्रवृत्तास्तु वेगवत्यो महास्वनाः ॥ १५
सर्वमापूरयन्तीदं तिष्ठन्ति[15] विचरन्ति च । सलिलेनैवोर्मिमता लोकालोकः समन्ततः ॥ १६
अपामपि गुणो यस्तु ज्योतिषा[16] पीयते तु सः । नश्यन्त्यापः सुतप्ताश्च रसतन्मात्रसंक्षयात् ॥ १७
ततश्चाऽऽपो[17]ऽमृतरसा ज्योतिष्ट्वं प्राप्नुवन्ति वै । अग्न्यवस्थे तु सलिले तेजसा सर्वतो वृते ॥ १८
स चाग्निः सर्वतो व्याप्य आदत्ते तज्जलं तदा । सर्वमापूर्यतो चाभि(रयत्यग्नि)स्तदा जगदिदं शनैः
अर्चिभिः संतते तस्मिंस्तिर्यगूर्ध्वमधस्तथा । ज्योतिषोऽपि परं रूपं वायुरत्ति प्रभाकरम् ॥ २०
प्रलीने च ततस्तस्मिन्वायुभूतेऽखिलात्मके । प्रनष्टे रूपतन्मात्रे कृतरूपो विभावसुः ॥ २१
प्रशाम्यति तदा ज्योतिर्वायुर्दोधूयते महान् । निरालोके तदा लोके वायुसंस्थे च तेजसि ॥ २२
ततः प्रलयमासाद्य वायुसंभवमात्मनः । ऊर्ध्वं[19] च वायुस्तिर्यक्च दोधवीति दिशो दश ॥ २३
वायोस्त्वपि गुणं स्पर्शमाकाशं ग्रसते ततः । प्रशाम्यति तदा वायुः खं तु तिष्ठत्यनावृतम् ॥ २४
अरूपमरसस्पर्शमगन्धवदमूर्तिमत् । सर्वमापूरयच्चैव सुमहत्तत्प्रकाशते ॥ २५
परिमण्[20]डलतस्तत्तु आकाशं शब्दलक्षणम् । शब्दमात्रं तथाऽऽकाशं सर्वमावृत्य तिष्ठति ॥ २६
ततः शब्दगुणं तस्य भूतादिर्ग्रसते पुनः । भूतेन्द्रियेषु युगपद्भूतादौ संस्थितेषु वै ॥ २७
अभिमानात्मको ह्येष भूतादिस्तामसः स्मृतः । *भूतादिं ग्रसते चापि महाबुद्धिर्विचक्ष[21]णा ॥ २८
उर्वी महांश्च जगतः प्रान्तेऽन्तर्बाह्यतस्तथा । एवं[22] सप्तमहाबुद्धिः (?) क्रमात्प्रकृतयस्तथा ॥ २९
प्रत्याहारैस्तु ताः सर्वाः प्रविशन्ति परस्परम् । येनेदमावृतं सर्वमण्डमप्सु प्रलीयते ॥ ३०
सप्तद्वीपसमुद्रान्तं सप्तलोकं सपर्वतम् । उदकावरणं ह्यत्र ज्योतिषा पीयते तु तत् ॥ ३१

* कपुस्तक एतदादि प्रकृतय इत्यन्तं नास्ति ।

१ क. ख. °वे पुनस्त° । २ क. शान्तो । ३ क. °पमयो ह । ४ क. ख. °त्मकम् । ए° । ५ क. °स्तवं क° । ६ ख °त्तिकश्च क° । ७ ग. यः । ८ ग. संस्कानले । ९ ग. °त्तस्य सं° । १० ख. संकुले । ११ क. °न्प्रकृते प्र° । १२ ग °न्धात्मकं रसम् । १३ क. शान्तगन्धा । १४ क. ग. °लयत्वाय क° । १५ ग. °न्ति च रमन्ति । १६ क. °तिषि लीय° १७ ग. °पो हृत° । १८ ग. वायुः सं° । १९ क. ग. °र्ध्वं चाधश्च तिर्य° । २० ग. °ण्डलं तच्छुषिरमाका° । २१ ग. °क्षणः उ, । २२ ख. °वं सुप्ते महायुद्धे क° ।

ज्योतिर्वायौ लयं याति यात्याकाशे समीरणः। आकाशं चैव भूतादिर्ग्रसते तं तथा महान्॥३२
महान्तमेभिः सहितं प्रकृतिर्ग्रसते द्विजाः। गुणसाम्यमनुद्रिक्तमन्यूनं च द्विजोत्तमाः॥ ३३
प्रोच्यते प्रकृतिर्हेतुः प्रधानं कारणं परम्। इत्येषा प्रकृतिः सर्वा व्यक्ताव्यक्तस्वरूपिणी॥ ३४
व्यक्तस्वरूपमव्यक्ते तस्यां विप्राः प्रलीयते। एकः शुद्धोऽक्षरो नित्यः सर्वव्यापी तथा पुनः ३५
सोऽप्यंशः सर्वभूतस्य द्विजेन्द्राः परमात्मनः। नश्यन्ति सर्वा यत्रापि नामजात्यादिकल्पनाः ३६
सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे। स ब्रह्म तत्परं धाम परमात्मा परेश्वरः॥ ३७
स विष्णुः सर्वमेवेदं यतो नाऽऽवर्तते पुनः। प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी॥
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि। परमात्मा च सर्वेषामाधारः परमेश्वरः॥ ३९
विष्णुनाम्ना स वेदेषु वेदान्तेषु च गीयते। प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम्॥ ४०
ताभ्यामुभाभ्यां पुरुषैर्यज्ञमूर्तिः स इज्यते। ऋग्यजुःसामभिर्मार्गैः प्रवृत्तैरिज्यते ह्यसौ॥ ४१
यज्ञेश्वरो यज्ञपुमान्पुरुषैः पुरुषोत्तमः। ज्ञानात्मा ज्ञानयोगेन ज्ञानमूर्तिः स इज्यते॥ ४२
निवृत्तैर्योगमार्गैश्च विष्णुर्मुक्तिफलप्रदः। ह्रस्वदीर्घप्लुतैर्यत्तु किंचिद्वस्त्वभिधीयते॥ ४३
यच्च वाचामविषयस्तत्सर्वं विष्णुरव्ययः। व्यक्तः स एवमव्यक्तः स एव पुरुषोऽव्ययः॥ ४४
परमात्मा च विश्वात्मा विश्वरूपधरो हरिः। व्यक्ताव्यक्तात्मिका तस्मिन्प्रकृतिः सा विलीयते॥
पुरुषश्चापि भो विप्रा यस्तदव्याकृतात्मनि। द्विपरार्धात्मकः कालः कथितो यो मया द्विजाः ४६
तदहस्तस्य विप्रेन्द्रा विष्णोरीशस्य कथ्यते। व्यक्ते तु प्रकृतौ लीने प्रकृत्यां पुरुषे तथा॥ ४७
तत्राऽऽस्थिते निशा तस्य तत्प्रमाणा तपोधनाः। नैवाहस्तस्य च निशा नित्यस्य परमात्मनः॥
उपचारात्तथाऽप्येतत्तस्येशस्य तु कथ्यते। इत्येष मुनिशार्दूलाः कथितः प्राकृतो लयः॥ ४९

इति श्रीमहापुराणे आदिब्राह्मे प्राकृतलयनिरूपणं नाम द्वात्रिंशदधिक-द्विशततमोऽध्यायः॥ २३२॥

आदितः श्लोकानां समष्ट्यङ्काः—१२९५१

---

अथ त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः।

---

व्यास उवाच—

आध्यात्मिकादि भो विप्रा ज्ञात्वा तापत्रयं बुधः। उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम्
आध्यात्मिकोऽपि द्विविधः शारीरो मानसस्तथा। शारीरो बहुभिर्भेदैर्भिद्यते श्रूयतां च सः॥२
शिरोरोगप्रतिश्यायज्वरशूलभगंदरैः। गुल्मार्शःश्वयथुश्वासच्छर्द्यादिभिरनेकधा॥ ३
तथाऽक्षिरोगातीसारकुष्ठाङ्गामयसंज्ञकैः। भिद्यते देहजस्तापो मानसं श्रोतुमर्हथ॥ ४
कामक्रोधभयद्वेषलोभमोहविषादजः। शोकासूयावमानेर्ष्यामात्सर्याभिभवस्तथा॥ ५
मानसोऽपि द्विजश्रेष्ठास्तापो भवति नैकधा। इत्येवमादिभिर्भेदैस्तापो ह्याध्यात्मिकः स्मृतः॥ ६

---

१ क. °जाः। स्वगुणे सा°। २ क. °म्यमुद्रि°। ३ क. °क्षयो नि°। ४ क. °ह्मणः परो वासः प°। ५ ख. °रं वासः प°। ६ क. ख. °त्मा स चेश्व°। ७ ग. यतिः। ८ क. °दारम्भेषु गी°। ९ ग. प्रवृत्तिं। १० ख °मान्यज्ञभुक्पु°। ११ क. °वृत्ते यो°। १२ क. °मार्गे तु वि°। १३ क. ख. ततः स्थि°। १४ क. द्विजोत्तमाः। १५ ग. °को वै द्वि°। १६ क. °ररोगभ°। १७ क. °रकव्याम°।

मृगपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः । सरीसृपाद्यैश्च नृणां जन्यते चाऽऽधिभौतिकः ॥ ७
शीतोष्णवातवर्षाम्बुवैद्युतादिसमुद्भवः । तापो द्विजवरश्रेष्ठाः कथ्यते चाऽऽधिदैविकः ॥ ८
गर्भजन्मजराज्ञानमृत्युनारकजं तथा । दुःखं सहस्रशो भेदैर्भिद्यते मुनिसत्तमाः ॥ ९
सुकुमारतनुर्गर्भे जन्तुर्बहुमलावृते । उल्बसंवेष्टितो भग्नपृष्ठग्रीवास्थिसंहतिः ॥ १०
अत्यम्लकटुतीक्ष्णोष्णलवणैर्मातृभोजनैः । अतितापिभिरत्यर्थं बाध्यमानोऽतिवेदनः ॥ ११
प्रसारणाकुञ्चनादौ नाङ्गा(ङ्गा)नां प्रभुरात्मनः । शकृन्मूत्रमहापङ्कशायी सर्वत्र पीडितः ॥ १२
निरुच्छ्वासः सचैतन्यः स्मरञ्जन्मशतान्यथ । आस्ते गर्भेऽतिदुःखेन निजकर्मनिबन्धनः ॥ १३
जायमानः पुरीषासृङ्मूत्रशुक्राविलाननः । प्राजापत्येन वातेन पीड्यमानास्थिबन्धनः ॥ १४
अधोमुखस्तैः क्रियते प्रबलैः सूतिमारुतैः । क्लेशैर्निष्क्रान्तिमाप्नोति जठरान्मातुरातुरः ॥ १५
मूर्छामवाप्य महतीं संस्पृष्टो बाह्यवायुना । विज्ञानभ्रंशमाप्नोति जातस्तु मुनिसत्तमाः ॥ १६
कण्टकैरिव तुन्नाङ्गः क्रकचैरिव दारितः । पूतिव्रणान्निपतितो धरण्यां क्रिमिको यथा ॥ १७
कण्डूयनेऽपि चाशक्तः परिवर्तेऽप्यनीश्वरः । स्तनपानादिकाहारमवाप्नोति परेच्छया ॥ १८
अशुचिस्रस्तरे सुप्तः कीटदंशादिभिस्तथा । भक्ष्यमाणोऽपि नैवैषां समर्थो विनिवारणे ॥ १९
जन्मदुःखान्यनेकानि जन्मनोऽनन्तराणि च । बालभावे यदाप्नोति आधिभूतादिकानि च ॥ २०
अज्ञानतमसा छन्नो मूढान्तःकरणो नरः । न जानाति कुतः कोऽहं कुत्र गन्ता किमात्मकः ॥ २१
केन बन्धेन बद्धोऽहं कारणं किमकारणम् । किं कार्यं किमकार्यं वा किं वाच्यं किं न चोच्यते
को धर्मः कश्च वाऽधर्मः कस्मिन्वर्तेत वै कथम् । किं कर्तव्यमकर्तव्यं किं वा किं गुणदोषवत् २३
एवं पशुसमैर्मूढैरज्ञानप्रभवं महत् । अवाप्यते नरैर्दुःखं शिश्नोदरपरायणैः ॥ २४
अज्ञानं तामसो भावः कार्यारम्भप्रवृत्तयः । अज्ञानिनां प्रवर्तन्ते कर्मलोपस्ततो द्विजाः ॥ २५
नरकं कर्मणां लोपात्फलमाहुर्महर्षयः । तस्मादज्ञानिनां दुःखमिह चामुत्र चोत्तमम् ॥ २६
जराजर्जरदेहश्च शिथिलावयवः पुमान् । विचलच्छीर्णदशनो वलिस्नायुशिरावृतः ॥ २७
दूरप्रनष्टनयनो व्योमान्तर्गततारकः । नासाविवरनिर्यातरोमपुञ्जश्चलद्वपुः ॥ २८
प्रकटीभूतसर्वास्थिर्नतपृष्ठास्थिसंहतिः । उत्सन्नजठराग्नित्वादल्पाहारोऽल्पचेष्टितः ॥ २९
कृच्छ्रचंक्रमणोत्थानशयनासनचेष्टितः । मन्दीभवच्छ्रोत्रनेत्रगलल्लालाविलाननः ॥ ३०
अनायत्तैः समस्तैश्च करणैर्मरणोन्मुखः । तत्क्षणेऽप्यनुभूतानामस्मर्ताऽखिलवस्तुनाम्* ॥ ३१
सकृदुच्चारिते वाक्ये समुद्भूतमहाश्रमः । श्वासकासामयायाससमुद्भूतप्रजागरः ॥ ३२
अन्येनोत्थाप्यतेऽन्येन तथा संवेश्यते जरी । भृत्यात्मपुत्रदाराणामपमानपराकृतः ॥ ३३
प्रक्षीणाखिलशौचश्च विहाराहारसंस्पृहः । हास्यः परिजनस्यापि निर्विण्णाशेषबान्धवः ॥ ३४
अनुभूतमिवान्यस्मिञ्जन्मन्यात्मविचेष्टितम् । संस्मरन्यौवने दीर्घं निश्वसित्यतितापितः ॥ ३५
एवमादीनि दुःखानि जरायामनुभूय च । मरणे यानि दुःखानि प्राप्नोति शृणु तान्यपि ॥ ३६

---

* आर्षो नुडभावः ।

---

१ क. °नुष्यौघैः पि° । २ ख. °ते । वसते वे° । ३ क. °तो भुग्न° । ४ क. °वास्यसं° । ५ क. °नोऽभ्यन्त° । ६ क. चोष्यते । ७ क. °शनस्त्वचा स्ना° । ८ क. °मुद्गत° । ९ ग. °कासमहाया° । १० क. ख. °मवमा° । ११ क. °परिक्षतः । ख. °परिप्लुतः ।

श्लथग्रीवाङ्घ्रिहस्तोऽथ प्राप्तो वेपथुना नरः । मुहुर्ग्लानिपरश्चासौ मुहुर्ज्ञानबलान्वितः ॥ ३७
हिरण्यधान्यतनयभार्याभृत्यगृहादिषु । एते कथं भविष्यन्तीत्यतीवममताकुलः ॥ ३८
मर्मविद्भिर्महारोगैः क्रकचैरिव दारुणैः । शरैरिवान्तकस्योग्रैश्छिद्यमानास्थिबन्धनः ॥ ३९
परिवर्तमानताराक्षिहस्तपादं मुहुः क्षिपन् । संशुष्यमाणताल्वोष्ठकण्ठो घुरघुरायते ॥ ४०
निरुद्धकण्ठदेशोऽपि उदानश्वासपीडितः । तापेन महता व्याप्तस्तृषा व्याप्तस्तथा क्षुधा ॥ ४१
क्लेशादुत्क्रान्तिमाप्नोति याम्यकिंकरपीडितः । ततश्च यातनादेहं क्लेशेन प्रतिपद्यते ॥ ४२
एतान्यन्यानि चोग्राणि दुःखानि मरणे नृणाम् । शृणुध्वं नरके यानि प्राप्यन्ते पुरुषैर्मृतैः ॥ ४३
याम्यकिंकरपाशादिग्रहणं दण्डताडनम् । यमस्य दर्शनं चोग्रमुग्रमार्गविलोकनम् ॥ ४४
करम्भवालुकावह्नियन्त्रशस्त्रादिभीषणे[3] । प्रत्येकं यातनायाश्चै यातनादि द्विजोत्तमाः ॥ ४५
क्रकचैः पीड्यमानानां मृ(मू)षायां चापि ध्माप्यताम् । कुठारैः पाट्यमानानां भूमौ चापि निखन्यताम् ॥ ४६
शूलेष्वारोप्यमाणानां व्याघ्रवक्त्रे प्रवेश्यताम् । गृध्रैः संभक्ष्यमाणानां द्वीपिभिश्चोपभुज्यताम् ४७
क्वथ्यतां तैलमध्ये च क्लिद्यतां क्षारकर्दमे । उच्चान्निपात्यमानानां क्षिप्यतां क्षेपयन्त्रकैः ॥ ४८
नरके यानि दुःखानि पापहेतूद्भवानि वै । प्राप्यन्ते नारकैर्विप्रास्तेषां संख्या न विद्यते ॥ ४९
न केवलं द्विजश्रेष्ठा नरके दुःखपद्धतिः । स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः ॥ ५०
पुनश्च गर्भो भवति जायते च पुनर्नरः । गर्भे विलीयते भूयो जायमानोऽस्तमेति च ॥ ५१
जातमात्रश्च म्रियते बालभावे च यौवने । यद्यत्प्रीतिकरं पुंसां वस्तु विप्राः प्रजायते ॥ ५२
तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति । कलत्रपुत्रमित्रादिगृहक्षेत्रधनादिकैः ॥ ५३
क्रियते न तथा भूरि सुखं पुंसां यथाऽसुखम् । इति संसारदुःखार्कतापतापितचेतसाम् ॥ ५४
विमुक्तिपादपच्छायामृते कुत्र सुखं नृणाम् । तदस्य त्रिविधस्यापि दुःखजातस्य पण्डितैः ॥ ५५
गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः । निरस्तातिशयाह्लादं सुखभावैकलक्षणम् ॥ ५६
भेषजं भगवत्प्राप्तिरेका चाऽऽत्यन्तिकी मता । तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः ॥ ५७
तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं द्विजोत्तमाः । आगमोत्थं [9]विवेकाच्च द्विधा ज्ञानं तथोच्यते ॥ ५८
शब्दब्रह्माऽऽगममयं परं ब्रह्म विवेकजम् । अन्धं तम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम् ॥ ५९
यथा सूर्यस्तथा ज्ञानं यद्वै विप्रा विवेकजम् । मनुरप्याह वेदार्थं स्मृत्वा यन्मुनिसत्तमाः ॥ ६०
तदेतच्छ्रूयतामत्र [10]संबन्धे गदतो मम । द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ॥ ६१
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति । द्वे विद्ये वै वेदितव्ये इति चाऽऽथर्वणी श्रुतिः ॥
परया[11] ह्यक्षरप्राप्तिर्ऋग्वेदादिमयाऽपरा । यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम् ॥ ६३
अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतम् । वित्तं सर्वगतं नित्यं भूतयोनिमकारणम् ॥ ६४
व्याप्यं व्याप्तं यतः सर्वं तद्वै पश्यन्ति सूरयः । तद्ब्रह्म परमं धाम तद्ध्येयं मोक्षकाङ्क्षिभिः ॥ ६५
[12]श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् । उत्पत्तिं[13] प्रलयं चैव भूतानामागतिं गतिम् ॥ ६६
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति । ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ॥ ६७

---

१ ख. प्राप्नोति यातनां ततः । मु° । २ ख. °यतातभृ° । ३ क. °षणैः । प्र° । ख. °षणम् । प्र° । ४ ग. °श्च पातानां हि द्वि° । ५ क. °म् । यन्त्रेष्वा° । ६ ख. ग. °त्रार्थगृ° । ७ क. °स्तातपपारादिसु° । ८ ख. °हलादिसु° । ९ ख. विवेकोत्थं । १० ख. संभ्रमो । ११ ग. °या दुष्कर° । १२ क. °तिबाह्योचितं । १३ क. °त्तिं च विपत्तिं च भू° ।

भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः । सर्वाणि तत्र भूतानि निवसन्ति परात्मनि ॥ ६८
भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः । उवाचेदं महर्षिभ्यः पुरा पृष्टः प्रजापतिः ॥ ६९
नामव्याख्यामनन्तस्य वासुदेवस्य तत्त्वतः । भूतेषु वसते योऽन्तर्वसन्त्यत्र च तानि यत् ॥
धाता विधाता जगतां वासुदेवस्ततः प्रभुः । ७०

ससर्वभूतप्रकृतिर्गुणांश्च दोषांश्च सर्वान्स(न)गुणो ह्यतीतः ।
अतीतसर्वावरणोऽखिलात्मा तेनाऽऽवृतं यद्भुवनान्तरालम् ॥ ७१
समस्तकल्याणगुणात्मको हि स्वशक्तिलेशाद्धृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥ ७२
तेजोबलैश्वर्यमहावबोधः स्ववीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परापरेशे ॥ ७३
स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः ।
सर्वेश्वरः सर्वदृक्सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥ ७४
संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।
संदृश्यते वाऽप्यथ गम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥ ७५

इति श्रीमहापुराणे आदिब्राह्मे व्यासर्षिसंवादे आत्यन्तिकलयनिरूपणं नाम त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३०२६

---

अथ चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ।

---

मुनय ऊचुः—
इदानीं ब्रूहि योगं च दुःखसंयोगभेषजम् । यं विदित्वाऽव्ययं तत्र युञ्जामः पुरुषोत्तमम् ॥ १
श्रुत्वा स वचनं तेषां कृष्णद्वैपायनस्तदा । अब्रवीत्परमप्रीतो योगी योगविदां वरः ॥ २
व्यास उवाच—
योगं वक्ष्यामि भो विप्राः शृणुध्वं भवनाशनम् । यमभ्यस्याऽऽप्नुयाद्योगी मोक्षं परमदुर्लभम् ॥ ३
श्रुत्वाऽऽदौ योगशास्त्राणि गुरुमाराध्य भक्तितः । इतिहासं पुराणं च वेदांश्चैव विचक्षणः ॥ ४
आहारं योगदोषांश्च देशकालं च बुद्धिमान् । ज्ञात्वा समभ्यसेद्योगं निर्द्वंद्वो निष्परिग्रहः ॥ ५
भुञ्जन्सक्तुं यवागूं च तक्रमूलफलं पयः । यावकं कणपिण्याकमाहारं योगसाधनम् ॥ ६
न मनोविकले ध्माते न श्रान्ते क्षुधिते तथा । न द्वंद्वे न च शीते च न चोष्णे नानिलात्मके ॥ ७
सशब्दे न जलाभ्यासे जीर्णगोष्ठे चतुष्पथे । सरीसृपे श्मशाने च न नद्यन्तेऽग्निसंनिधौ ॥ ८
न चैत्ये न च वल्मीके सभये कूपसंनिधौ । न शुष्कपर्णनिचये योगं युञ्जीत कर्हिचित् ॥ ९

---

१ क. °नि व° । २ क. परमात्म° । ३ ग. °कृतेर्विकारं गुणां° । ४ ख. °तिर्विकारान्गुणां° । ५ ख. °श्च स गुणेष्वती° ६ ग. स वत्स्यते ततः । ७ ख. यज्ञव° । ८ क. ख परावरा° । ९ ख. °रावरे° । १० क. व्यस्तस° । ११ क. °मस्तरू° १२ ख. °र्वजनप्रद्रष्टा स° । १३ ख. °प्रीतस्तदा योगवि° । १४ ग. योगं । १५ ग. °द्योगी नि° । १६ ख. °हः । भैक्ष सक्तुं । १७ क. च पत्रं मू° ।

देशानेताननादृत्य मूढत्वाद्यो युनक्ति वै । प्रवक्ष्ये तस्य ये दोषा जायन्ते विघ्नकारकाः ॥ १०
बाधिर्यं जडता लोपः स्मृतेर्मूकत्वमन्धता । ज्वरश्च जायते सद्यस्तद्वदज्ञानसंभवः ॥ ११
तस्मात्सर्वात्मना कार्या रक्षा योगविदा सदा । धर्मार्थकाममोक्षाणां शरीरं साधनं यतः ॥ १२
आश्रमे विजने गुह्ये निःशब्दे निर्भये नगे । शून्यागारे शुचौ रम्ये चैकान्ते देवतालये ॥ १३
रजन्याः पश्चिमे यामे पूर्वे च सुसमाहितः । पूर्वाह्णे मध्यमे चा[3]ह्नि युक्ताहारो जितेन्द्रियः ॥ १४
आसीनः प्रा[4]ङ्मु[5]खो रम्य आसने सुखनिश्चले । नातिनीचे न चोच्छ्रिते निस्पृहः सत्यवाक्शुचिः
[6]युक्तनिद्रो जितक्रोधः सर्वभूतहिते रतः । सर्वद्वंद्वसहो धीरः समकायाङ्घ्रिमस्तकः ॥ १६
नाभौ निधाय हस्तौ द्वौ शान्तः पद्मासने स्थितः । संस्थाप्य दृष्टिं नासाग्रे प्राणानायम्य वाग्यतः॥
समाहृत्येन्द्रियग्रामं मनसा हृदये मुनिः । प्रणवं दीर्घमुद्यम्य [7]संवृतास्यः सुनिश्चलः[8] ॥ १८
रजसा तमसो वृत्तिं सत्त्वेन रजसस्तथा । संछाद्य निर्मले शान्ते स्थितः संवृतलोचनः ॥ १९
हृत्पद्मकोटरे लीनं सर्वव्यापि निरञ्जनम् । युञ्जीत सततं योगी मुक्तिदं पुरुषोत्तमम् ॥ २०
करणेन्द्रियभूतानि क्षेत्रज्ञे प्रथमं न्यसेत् । क्षेत्रज्ञश्च परे योज्यस्ततो युञ्जाति योगवित् ॥+ २१
मनो यस्यान्तमभ्येति परमात्मनि [9]चञ्चलम् । संत्यज्य विषयांस्तस्य योगसिद्धिः प्रकाशिता ॥
यदा निर्विषयं चित्तं परे ब्रह्मणि लीयते । समाधौ योगयुक्तस्य तदाऽभ्येति परं पदम् ॥ २३
[10]असंसक्तं यदा चित्तं योगिनः सर्वकर्मसु । [11]भवत्यानन्दमासाद्य तदा निर्वाणमृच्छति ॥ २४
[12]शुद्धं धामत्रयातीतं तुर्याख्यं पुरुषोत्तमम् । प्राप्य योगबलाद्योगी मुच्यते नात्र संशयः[13] ॥ २५
निःस्पृहः सर्वकामेभ्यः सर्वत्र प्रियदर्शनः । सर्वत्रानित्यबुद्धिस्तु योगी मुच्येत नान्यथा ॥ २६
इन्द्रियाणि न सेवेत वैराग्येण च योगवित् । सदा चाभ्यासयोगेन मुच्यते नात्र संशयः ॥ २७
न च पद्मा[14]सनाद्योगो न नासाग्रनिरीक्षणात् । मनसश्चेन्द्रियाणां च संयोगो योग उच्यते ॥ २८
एवं मया मुनिश्रेष्ठा योगः प्रोक्तो विमुक्तिदः । संसारमोक्षहेतुश्च किमन्यच्छ्रोतुमिच्छथ ॥ २९

लोमहर्षण उवाच—

श्रुत्वा ते वचनं तस्य साधु साध्विति चाब्रुवन् । व्या[15]सं प्रशस्य संपू[16]ज्य पुनः प्रष्टुं समुद्यताः ३०

इति श्रीमहापुराणे आदिब्राह्मे व्यासर्षिसंवादे योगाभ्यासनिरूपणं नाम
चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३०५६

+ इतः परं ख.पुस्तके—'वालाग्रशतधाभागलक्षणं परमं पदम् । मनोदीपेन पश्यन्ति योगिनो ध्यानतत्पराः । इन्द्रियाणि समाहृत्य कूर्मोऽङ्गानीव योगवित् । इत्यधिकं दृश्यते ।

१ ग. °द्यः शुद्धविज्ञानयोगिनः । त° । २ क. ख. भागे । ३ क. ख. वाऽह्नि । ४ क. °ङ्मुखे देश आ° । ५ ग. °खोदग्वा आ° । ६ ग. मुक्तनिद्रो । ७ ख. संयतास्यः । ८ ग. °लः । सोमपा योगयुक्तस्य युञ्जन्तः परमं पदम् । बाह्यात्मा संपरित्यज्य योऽन्तर्ध्याननिरतः सदा । अन्तःसुखोऽन्तरारामः स मोक्षं लभते ध्रुवम् । जाग्रत्स्वप्नसुषुप्तं च त्यक्त्वा स्थानत्रयं बुधः । तुरीयं पदमासाद्य न शोचति न काङ्क्षति । मनो । ९ ख. केवलम् । १० क. ख. असंशयं । ११ ख. भगवत्पादमा° । १२ क. ख. °द्धं सूक्ष्मं गुणातीतं सत्त्वाख्यं । १३ क. °यः । बद्धप° । १४ क. °सनो योगी स्वना° । १५ क. ख. °सं ह° । १६ क. ख. °ज्य मुनयः पु° ।

अथ पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ।

---

मुनय ऊचुः—

तव वक्त्राब्धिसंभूतममृतं वाङ्मयं मुने । पिबतां नो द्विजश्रेष्ठ न तृप्तिरिह दृश्यते ॥ १
तस्माद्योगं मुने ब्रूहि विस्तरेण विमुक्तिदम् । सांख्यं च द्विपदां श्रेष्ठ श्रोतुमिच्छामहे वयम् ॥ २
प्रज्ञावाञ्श्रोत्रियो यज्वा ख्यातः प्राज्ञोऽनसूयकः । सत्यधर्ममतिर्ब्रह्मन्कथं ब्रह्माधिगच्छति ॥ ३
तपसा ब्रह्मचर्येण सर्वत्यागेन मेधया । सांख्ये वा यदि वा योग एतत्पृष्टो वदस्व नः ॥ ४
मनसश्चेन्द्रियाणां च यथैकाग्र्यमवाप्यते । येनोपायेन पुरुषस्तत्त्वं व्याख्यातुमर्हसि ॥ ५

व्यास उवाच—

नान्यत्र ज्ञानतपसोर्नान्यत्रेन्द्रियनिग्रहात् । नान्यत्र सर्वसंत्यागात्सिद्धिं विन्दति कश्चन ॥ ६
महाभूतानि सर्वाणि पूर्वसृष्टिः स्वयंभुवः । भूयिष्ठं प्राणभृद्ग्रामे निविष्टानि शरीरिषु ॥ ७
भूमेर्देहो जलात्स्नेहो ज्योतिषश्चक्षुषी स्मृते । प्राणापानाश्रयो वायुः कोष्ठाकाशं शरीरिणाम् ॥ ८
क्रान्तौ विष्णुर्बले शक्रः कोष्ठेऽग्निर्भोक्तुमिच्छति । कर्णयोः प्रदिशः श्रोत्रे जिह्वायां वाक्सरस्वती
कर्णौ त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी । दश तानीन्द्रियोक्तानि द्वाराण्याहारसिद्धये १०
शब्दस्पर्शौ तथा रूपं रसं गन्धं च पञ्चमम्* । इन्द्रियार्थान्पृथग्विद्यादिन्द्रियेभ्यस्तु नित्यदा ११
इन्द्रियाणि मनो युङ्क्ते +अवश्या(शा)निव राजिनः(लः) । मनश्चापि सदा युङ्क्ते भूतात्मा हृदयाश्रितः ॥ १२
इन्द्रियाणां तथैवैषां सर्वेषामीश्वरं मनः । नियमे च विसर्गे च भूतात्मा मनसस्तथा ॥ १३
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः । प्राणापानौ च जीवश्च नित्यं देहेषु देहिनाम् ॥ १४
*आश्रयो नास्ति सत्त्वस्य गुणशब्दो न चेतनाः । सत्त्वं हि तेजः सृजति न गुणान्वै कथंचन ॥
एवं सप्तदशं देहं वृतं षोडशभिर्गुणैः । मनीषी मनसा विप्राः पश्यत्यात्मानमात्मनि ॥ १६
न ह्ययं चक्षुषा दृश्यो न च सर्वैरपीन्द्रियैः । मनसा तु प्रदीप्तेन महानात्मा प्रकाशते ॥ १७
अशब्दस्पर्शरूपं तच्च(च्चा) रसागन्धमव्ययम् । अशरीरं शरीरे[10] स्वे निरीक्षेत निरिन्द्रियम् ॥ १८
†अव्यक्तं सर्वदेहेषु मर्त्येषु परमार्चितम् । योऽनुपश्यति स प्रेत्य कल्पते ब्रह्मभूयतः ॥ १९
विद्याविनयसंपन्नब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ २०
स हि सर्वेषु भूतेषु जङ्गमेषु ध्रुवेषु च । वसत्येको महानात्मा येन सर्वमिदं ततम् ॥ २१
सर्वभूतेषु चाऽऽत्मानं सर्वभूतानि चाऽऽत्मनि[13] । यदा पश्यति भूतात्मा ब्रह्म संपद्यते तदा २२
यावानात्मनि वेदाऽऽत्मा तावानात्मा परात्मनि । य एवं सततं वेद सोऽमृतत्वाय कल्पते ॥ २३
सर्वभूतात्मभूतस्य सर्वभूतहितस्य च । *देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ २४

---

* एतदग्रे कथंचनेत्यन्तं ख. पुस्तके त्रुटितम् । + एतदादि सदा युङ्क्त इत्यन्तो ग्रन्थः क. पुस्तके नास्ति । * अयं श्लोको ग. पुस्तक एवं । † अयं श्लोकस्त्रुटितः ख. पुस्तके । * आर्षोऽयं संधिः ।

---

१ क. प्रजावां° । २ ग. ख्यातप्रज्ञो° । ३ ख. °कः । अभ्यासेन सदा ब्रह्म° । ग. °कः । अनागतगतिर्ब्र° । ४ ख. वायुश्चेष्टाकाशः श° । ५ क. शक्तः । ख. शक्त्या । ६ क. °र्थाय स्व° । ७ क. °नाश्रयः । प्रा° । ८ क. कृतं । ९ क. °त्मना । न । १० क. ख. °रेषु नि° । ११ क. सर्वेभ्यः कल्पान्ते न तु भूयते । वि° । १२ ग. °द्याभिजनसं° । १३ क. °नि । एवं च स° । १४ ग. सर्वात्मा । १५ ख. °तस्य देहिनः । दे° ।

ाकुन्तानामिवाऽऽकाशे मत्स्यानामिव चोदके । यथा गतिर्न दृश्येत तथा ज्ञानेविदां गतिः २५
ालः पचति भूतानि सर्वाण्येवाऽऽत्मनाऽऽत्मनि । यस्मिंस्तु पच्यते कालस्तन्न वेदेह कश्चन २६
ा तदूर्ध्वं न तिर्यक्च नाधो न च पुनः पुनः । न मध्ये प्रतिगृह्णीते नैव किंचिन्न कश्चन ॥ २७
र्वे तत्स्था इमे लोका बाह्यमेषां न किंचन । यद्यप्यग्रे समागच्छेद्यथा बाणो गुणच्युतः ॥ २८
ैवान्तं कारणस्येयाद्यद्यपि स्यान्मनोजवः । तस्मात्सूक्ष्मतरं नास्ति नास्ति स्थूलतरं तथा ॥ २९
र्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् । सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ ३०
तदेवाणोरणुतरं तन्महद्भ्यो महत्तरम् । तदन्तः सर्वभूतानां ध्रुवं तिष्ठन्न दृश्यते ॥ ३१
अक्षरं च क्षरं चैव द्वेधा भावोऽयमात्मनः । क्षरः सर्वेषु भूतेषु दिव्यं त्वमृतमक्षरम् ॥ ३२
नवद्वारं पुरं कृत्वा हंसो हि नियतो वशी । ईदृशः सर्वभूतस्य स्थावरस्य चरस्य च ॥ ३३
हानेनाभिविकल्पानां नराणां संचयेन च । शरीराणामजस्याऽऽहुर्हंसत्वं पारदर्शिनः ॥ ३४
हंसोक्तं च क्षरं चैव कूटस्थं यत्तदक्षरम् । तद्विद्वानक्षरं प्राप्य जहाति प्राणजन्मनी ॥ ३५

व्यास उवाच—

भवतां पृच्छतां विप्रा यथावदिह तत्त्वतः । सांख्यं ज्ञानेन संयुक्तं यदेतत्कीर्तितं मया ॥ ३६
योगकृत्यं तु भो विप्राः कीर्तयिष्याम्यतः परम् । एकत्वं बुद्धिमनसोरिन्द्रियाणां च सर्वशः ३७
आत्मनो व्यापिनो ज्ञानं ज्ञानमेतदनुत्तमम् । तदेतदुपशान्तेन दान्तेनाध्यात्मशीलिना ॥ ३८
आत्मारामेण बुद्धेन बोद्धव्यं शुचिकर्मणा । योगदोषान्समुच्छिद्य पञ्च यान्कवयो विदुः ॥ ३९
कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम् । क्रोधं शमेन जयति कामं संकल्पवर्जनात् ॥ ४०
सत्त्वसंसेवनाद्धीरो निद्रामुच्छेत्तुमर्हति । धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ॥ ४१
चक्षुः श्रोत्रं च मनसा मनो वाचं च कर्मणा । अप्रमादाद्भयं जह्याद्दम्भं प्राज्ञोपसेवनात् ॥ ४२
एवमेतान्योगदोषाञ्जयेन्नित्यमतन्द्रितः । अग्नींश्च ब्राह्मणांश्चाथ देवताः प्रणमेत्सदा ॥ ४३
वर्जयेदुद्धतां वाचं हिंसायुक्तां मनोनुगाम् । ब्रह्मतेजोमयं शुक्रं यस्य सर्वमिदं जगत् ॥ ४४
एतस्य भूतभूतस्य दृष्टं स्थावरजङ्गमम् । ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा ॥ ४५
शौचं चैवाऽऽत्मनः शुद्धिरिन्द्रियाणां च निग्रहः । एतैर्विवर्धते तेजः पाप्मानं चापकर्षति ॥ ४६
समः सर्वेषु भूतेषु लभ्यालभ्येन वर्तयन् । धूतपाप्मा तु तेजस्वी लघ्वाहारो जितेन्द्रियः ॥ ४७
कामक्रोधौ वशे कृत्वा निषेवेद्ब्रह्मणः पदम् । मनसश्चेन्द्रियाणां च कृत्वैकाग्र्यं समाहितः ॥ ४८
पूर्वरात्रे परार्धे च धारयेन्मन आत्मनः । जन्तोः पञ्चेन्द्रियस्यास्य यद्येकं क्लिन्नमिन्द्रियम् ॥ ४९
ततोऽस्य स्रवति प्रज्ञा गिरेः पादादिवोदकम् । मनसः पूर्वमादद्यात्कूर्माणामिव मत्स्यहा ॥ ५०
ततः श्रोत्रं ततश्चक्षुर्जिह्वा घ्राणं च योगवित् । तत एतानि संयम्य मनसि स्थापयेद्यदि ॥ ५१
तथैवापोह्य संकल्पान्मनो ह्यात्मनि धारयेत् । पञ्चेन्द्रियाणि मनसि हृदि संस्थापयेद्यदि ॥ ५२

---

१ ख. °तिर्विनश्ये° । २ ख. °नस्य चोदयः । का° । ३ क. °न । नैवोर्ध्वं न । ४ क. °र्यगधो न च भाति पु° । ५ ग. मन्ये । ६ ग. °हृण्भितो नै° । ७ क. °त्वा सोऽत्र वै नियतं वसेत् । ई° । ८ क. च । हीनेनाऽऽगतक° । ९ क. °रीरं हि नरस्येह निःसर्वं पा° । १० ख. ग. °प्रा वर्तं° । ११ ग. °रागेण । १२ क. ख. °श्च तान्क° । १३ ख. °येद्दुःखदां वा° । ग. °येत्कुश्रितां वा° । १४ क. °नोजवाम् । १५ ख. °म् । ब्राह्मं ते° । १६ क शक्रं । १७ ग. रसः । १८ क. °त्यं क्रीडाऽऽर्जं° । १९ ग. सम्यक्सर्वे° । २० ख. ग. लब्ध्वा लब्धेन । २१ ख. च तत्त्वैका° । २२ ख. क्षराति । २३ क. ख. मनसा । २४ क. °द्यात्कर्मणा° ।

यदैतान्यवतिष्ठन्ते मनःषष्ठानि चाऽऽत्मनि। प्रसीदन्ति च संस्थायां तदा ब्रह्म प्रकाशते ॥ ५४
विधूम इव दीप्तार्चिरादित्य इव दीप्तिमान्। वैद्युतोऽग्निरिवाऽऽकाशे[3] पश्यन्त्यात्मानमात्मनि ॥
सर्वं तत्र तु सर्वत्र व्यापकत्वाच्च दृश्यते। तं पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः ॥ ५५
धृतिमन्तो महाप्राज्ञाः सर्वभूतहिते रताः। एवं परिमितं कालमाचरन्संशितव्रतः ॥ ५६
आसीनो हि रहस्येको गच्छेदक्षरसाम्यताम्। प्रमोहो भ्रम आवर्तो घ्राणं श्रवणदर्शने ॥ ५७
अद्भुतानि रसः स्पर्शः शीतोष्णमारुताकृतिः। प्रतिभानुपसर्गांश्च प्रतिसंगृह्य योगतः ॥ ५८
तांस्तत्त्वविदनादृत्य साम्येनैव निवर्तयेत्। कुर्यात्परिचयं योगे त्रैलोक्ये नियतो मुनिः ॥ ५९
गिरिशृङ्गे तथा चैत्ये वृक्षमूलेषु योजयेत्। संनियम्येन्द्रियग्रामं कोष्ठे भाण्डमना इव ॥ ६०
एकाग्रं चिन्तयेन्नित्यं योगान्नोद्विजते मनः। येनोपायेन शक्येत नियन्तुं चञ्चलं मनः ॥ ६१
तत्र युक्तो निषेवेत न चैव विचलेत्ततः। शून्यागाराणि चैकाग्रो निवासार्थमुपक्रमेत् ॥ ६२
नातिव्रजेत्परं वाचा कर्मणा मनसाऽपि वा। उपेक्षको यताहारो लब्धालब्धसमो भवेत् ॥ ६३
यश्चैनमभिनन्देत यश्चैनमभिवादयेत्। समस्तयोश्चाप्युभयोर्नाभिध्यायेच्छुभाशुभम् ॥ ६४
न प्रहृष्येत लाभेषु नालाभेषु च चिन्तयेत्। समः सर्वेषु भूतेषु सधर्मा मातरिश्वनः ॥ ६५
एवं स्वस्थात्मनः साधोः सर्वत्र समदर्शिनः। षण्मासान्नित्ययुक्तस्य शब्दब्रह्माभिवर्तते ॥ ६६
वेदनार्तान्परान्दृष्ट्वा समलोष्टाश्मकाञ्चनः। एवं तु निरतो मार्गे विरमेन्न विमोहितः ॥ ६७
अपि वर्णावकृष्टस्तु नारी वा धर्मकाङ्क्षिणी। तावप्येतेन मार्गेण गच्छेतां परमां गतिम् ॥ ६८

अजं पुराणमजरं सनातनं यमिन्द्रियातिगमगोचरं द्विजाः।
अवेक्ष्य चेमां परमेष्ठिसाम्यतां प्रयान्त्यनावृत्तिगतिं मनीषिणः ॥ ६८

इति श्रीमहापुराणे आदिब्राह्मे व्यासर्षिसंवादे सांख्ययोगनिरूपणं नाम पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३१२५

---

अथ षट्त्रिंशदधिकद्विशततमोऽध्यायः।

---

मुनय ऊचुः—

यद्येवं वेदवचनं कुरु कर्म त्यजेति च। कां दिशं विद्यया यान्ति कां च गच्छन्ति कर्मणा ॥ १
एतद्वै श्रोतुमिच्छामस्तद्भवान्प्रब्रवीतु नः। एतदन्योन्यवैरूप्यं वर्तते प्रतिकूलतः ॥ २

व्यास उवाच—

शृणुध्वं मुनिशार्दूला यत्पृच्छध्वं समासतः। कर्मविद्यामयौ चोभौ व्याख्यास्यामि क्षराक्षरौ ॥ ३
यां दिशं विद्यया यान्ति यां गच्छन्ति च कर्मणा। शृणुध्वं सांप्रतं विप्रा गहनं ह्येतदुत्तरम् ॥ ४

---

१ क. सच्छायां। २ ख. ˚प्ताग्निरा˚। ३ घ. ˚शे दृश्य˚। ४ ख. सर्वतश्च च स˚। ५ क. काष्ठे। ६ क. तादृङ्मना। ७ ख. एकान्ते। ८ क. ˚गात्मा चिन्तयन्परः। ये˚। ९ क. ख. ˚नः। तं च यु˚। ˚१० क. नाभिष्वज्येत बालं वा क˚। ११ क. ˚सा गिरा। उ˚। १२ क. जिताहारो। १३ क. लभ्यालभ्यस˚। १४ ख. ˚मात्मा मुनीश्वरः। ए˚। १५ ग. ˚नार्ताः प्रजा दृ˚। १६ ग. ˚सिपथं म˚। १७ ख. ग. यदिदं वे˚। १८ क. गतिं। १९ क. ˚यावेतौ व्या˚। २० ग. क्षराक्षरौ। २१ ग. ˚रौ। द्वा˚।

अस्ति धर्म इति युक्तं नास्ति तत्रैव यो वदेत् । यक्षस्य सादृश्यमिदं यक्षस्येदं भवेदथ* ॥ ५
द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मो निवृत्तो वा विभाषितः ॥ ६
कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ ७
कर्मणा जायते प्रेत्य मूर्तिमान्षोडशात्मकः । विद्यया जायते नित्यमव्यक्तं ह्यक्षरात्मकम् ॥ ८
कर्म त्वेके प्रशंसन्ति स्वल्पबुद्धिरता नराः । तेन ते देहजा[1]लेन रमयन्त उपासते ॥ ९
ये तु बुद्धिं परां प्राप्ता धर्मनै[2]पुण्यदर्शिनः । न ते कर्म प्रशंसन्ति कूपं नद्यां पिबन्निव ॥ १०
कर्मणां फलमाप्नोति सुखदुःखे भवाभवौ । विद्यया तदवाप्नोति यत्र गत्वा न शोचति ॥ ११
न म्रियते यत्र गत्वा यत्र गत्वा न जायते । न जीर्यते यत्र गत्वा यत्र गत्वा न वर्धते ॥ १२
यत्र तद्ब्रह्म परममव्यक्तमचलं ध्रुवम् । अव्याकृतमनायाममममृतं चा[3]धियोगवित् ॥ १३
द्वंद्वैर्न यत्र बाध्यन्ते मानसेन च कर्मणा । समाः सर्वत्र मैत्राश्च सर्वभूतहिते रताः ॥ १४
विद्यामयोऽन्यः पुरुषो द्विजाः कर्ममयोऽपरः । [4]विप्राश्चन्द्र[5]समस्पर्शः[6] सूक्ष्मया कलया स्थि[7]तः ॥
तदेतदृषिणा प्रोक्तं विस्तरेणानुगीयते । [8]न वक्तुं शक्यते द्रष्टुं चक्रतन्तुमिवाम्बरे[9] ॥ १६
एकादशविकारात्मा कलासंभारसंभृतः । मूर्तिमानिति तं विद्याद्विप्राः कर्मगुणात्मकम् ॥ १७
देवो यः संश्रितस्तस्मिं[10]न्बुद्धीन्दुरिव पुष्करे । क्षेत्रज्ञं तं विजानीयान्नित्यं योगजितात्मकम् ॥ १८
तमो रजश्च सत्त्वं च ज्ञेयं [11]जीवगुणात्मकम् । जीवमात्मगुणं विद्यादात्मानं परमात्मनः ॥ १९
सचेतनं जीवगुणं वदन्ति [12]से चेष्टते[13] जीवगुणं च सर्वम् ।
ततः परं क्षेत्रविदो वदन्ति[14] प्रकल्पयन्तो भुवनानि सप्त ॥ २०

व्यास उवाच—

प्रकृत्यास्तु विकारा ये क्षेत्र[15]ज्ञा[16]स्ते परिश्रुताः । ते चैनं न प्रजानन्ति न जानाति स तानपि ॥
तैश्चैव कुरुते कार्यं मनः[17]षष्ठैरिहेन्द्रियैः । सुदान्तैरिव संयन्ता [18]दृढः परमवाजिभिः ॥ २२
[19]इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यः परमं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ २३
महतः परमव्यक्तमव्यक्तात्परतोऽमृतम् । अमृता[20]न्न परं किंचित्सा काष्ठा परमा गतिः ॥ २४
एवं सर्वेषु भूतेषु गूढात्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ २५
अन्तरात्मनि संलीय मनःषष्ठानि मेधया । इन्द्रियैरिन्द्रियार्थांश्च बहुचित्तमचिन्तयन् ॥ २६
[21]ध्यानेऽपि परमं कृत्वा विद्यासंपादितं मनः । अनीश्वरः प्रशान्तात्मा ततो गच्छेत्परं पदम् २७
इन्द्रियाणां तु सर्वेषां वश्यात्मा चलित[22]स्मृतिः । आत्मनः संप्रदानेन मर्त्यो मृत्युमुपाश्नुते ॥ २८
विहृत्य सर्वसंकल्पान्सत्त्वे चित्तं निवेशयेत् । सत्त्वे चित्तं समावेश्य ततः काल[23]ंजरो भवेत् ॥ २९
चित्तप्रसादेन यतिर्जहातीह शुभाशुभम् । प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमत्यन्तमश्नुते ॥ ३०

---

* इत ऊर्ध्वं सार्धश्लोको नास्ति क. पुस्तके ।

---

१ ख. °जालानि र° । ग. °जातानि र° । २ क. °मैज्ञाः पुण्य° । ३ क. बाधयोगतः । ख. बाधियोगिता । ४ ख. विप्रश्च° । ५ ख. °न्द्रमसः स्पर्शात्स सूक्ष्मो लोकसंस्थि° । ग. °न्द्रमसं स्प° । ६ क. °स्पर्शं तत्सूक्ष्मक° । ग. स्पर्शसू° । ७ क. स्थितम् । ८ ख. न चक्रं शशिनं दृष्ट्वा चक्रत° । ९ क. चक्रुस्तरुमिवापरे । १० क. °स्मिन्नब्धीन्दु° । ११ ख. जीवात्मकं गुणम् । १२ ख. स तिष्ठते चेतयते तु स° । १३ क. °ते चिन्तयन्तीह स° । १४ ग. °न्ति प्राक्कल्पयन्यो भु° । १५ क. °ज्ञे ते प° । १६ ख. °ज्ञाश्च प° । १७ ग. मनसश्चेन्द्रियैः सह । सु° । १८ ख. दृढैः । १९ क. ख. अनर्थेभ्यः । २० क. ख. °ताच्च प° । २१ क. °नेनोप° । २२ ख. °स्मृतः । आ° । २३ ग. °लंचरो ।

लक्षणं तु प्रसादस्य यथा स्वप्ने सुखं भवेत्[1] । निर्वाते वा यथा दीपो दीप्यमानो न कम्पते ॥३१
एवं पूर्वापरे रात्रे युञ्जन्नात्मानमात्मना । लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि ॥ ३२
रहस्यं सर्ववेदानामनैतिह्यमनागमम्[3] । आत्मप्रत्ययकं शास्त्रमिदं पुत्रानुशासनम् ॥ ३३
धर्माख्यानेषु सर्वेषु सत्याख्यानेषु यद्वसु[4] । दशवर्षसहस्राणि निर्मथ्यामृतमुद्धृतम् ॥ ३४
नवनीतं यथा[5] दध्नः काष्ठादग्निर्यथैव[6] च । तथैव विदुषां ज्ञानं मुक्तिहेतोः[7] समुद्धृतम् ॥ ३५
स्नातकानामिदं शास्त्रं वाच्यं पुत्रानुशासनम् । तदिदं नाप्रशान्ताय नादान्ताय तपस्विने[8] ॥ ३६
नावेदविदुषे वाच्यं तथा नानुगताय च । नासूयकायानृजवे न चानिर्दिष्टकारिणे ॥ ३७
न तर्कशास्त्रदग्धाय तथैव पिशुनाय च । श्लाघिने श्लाघनीयाय प्रशान्ताय तपस्विने[9] ॥ ३८
इदं[10] प्रियाय पुत्राय शिष्यायानुगताय तु । रहस्यधर्मं वक्तव्यं नान्यस्मै तु कथंचन ॥ ३९
यद्प्यस्य महीं दद्याद्रत्नपूर्णामिमां नरः । इदमेव ततः श्रेय इति मन्येत तत्त्ववित् ॥ ४०
अतो[11] गुह्यतरार्थं तदध्यात्ममतिमानुषम्[12] । यत्तन्महर्षिभिर्दृष्टं वेदान्तेषु च गीयते ॥ ४१
तद्युष्मभ्यं प्रयच्छामि[13] यन्मां पृच्छत सत्तमाः । यन्मे मनसि वर्तेत यस्तु वो हृदि संशयः ॥
श्रुतं भवद्भिस्तत्सर्वं किमन्यत्कथयामि वः ॥ ४२

मुनय ऊचुः—

अध्यात्मं विस्तरेणेह पुनरेव वदस्व नः । यदध्यात्मं यथा[14] विप्रो भगवन्नृषिसत्तम ॥ ४३

व्यास उवाच—

अध्यात्मं यदिदं विप्राः पुरुषस्येह पठ्यते[15] । युष्मभ्यं कथयिष्यामि तस्य[16] व्याख्याऽवधार्यताम् ॥
भूमिरापस्तथा ज्योतिर्वायुराकाशमेव च । महाभूतानि[17] यश्चैव सर्वभूतेषु भूतकृत् ॥ ४५

मुनय ऊचुः—

आकारं[18] तु भवेद्यस्य यस्मिन्देहं न पश्यति । आकाशाद्यं शरीरेषु कथं तदुपवर्णयेत्[19] ॥
इन्द्रियाणां[20] गुणाः[21] केचित्कथं तानुपलक्षयेत् ॥ ४६

व्यास उवाच—

एतद्वो वर्णयिष्यामि यथावदनुदर्शनम्[22] । शृणुध्वं तदिहैकाग्र्या यथातत्त्वं यथा च तत् ॥ ४७
शब्दः श्रोत्रं तथा खानि त्रयमाकाशलक्षणम् । प्राणश्चेष्टा तथा स्पर्श एते वायुगुणास्त्रयः ॥ ४८
रूपं चक्षुर्विपाकश्च त्रिधा ज्योतिर्विधीयते । रसोऽथ[23] रसनं स्वेदो गुणास्त्वेते त्रयोऽम्भसाम् ॥४९
घ्रेयं घ्राणं शरीरं च भूमेरेते गुणास्त्रयः । एतावानिन्द्रियग्रामो व्याख्यातः पाञ्चभौतिकः ॥ ५०
वायोः स्पर्शो रसोऽद्भ्यश्च ज्योतिषो रूपमुच्यते । आकाशप्रभवः शब्दो गन्धो भूमिगुणः स्मृतः
मनो बुद्धिः स्वभावश्च गुणा एते स्वयोनिजाः[24] । [25]ते गुणानतिवर्तन्ते गुणेभ्यः परमा मताः ॥५२
यथा कूर्म इवाङ्गानि प्रसार्य संनियच्छति । एवमेवेन्द्रियग्रामं बुद्धिश्रेष्ठो नियच्छति[26] ॥ ५३

१ ख. स्वयम् । २ ख. °त् । शनैर्वाति यः । ३ ख. °मनौपम्यमनामयम् । ४ क. यद्वनु । ख. वस्तुषु । ५ ग. °सु । दर्शे दध्नस° । ६ क. °था दुग्धात्काष्ठा° । ७ ख. °हेतौ स° । ८ ग. °ने । इदं प्रियाय पुत्राय शिष्यायानु° । ९ ग. °ने । र° । १० ग. इदं । ११ क. ख. ततो । १२ क. यत्र गूढं समुद्दिष्टं । १३ क. ख. प्रवक्ष्यामि । १४ क. ख. विप्रं । १५ ख. इष्यते । १६ ग. तच्छृणुध्वमतन्द्रिताः । भू° । १७ ख. ग. °नि पञ्चैव । १८ ग. °काराततात वै यस्य । ख °काशस्तु भ° । १९ क. °र्णनम् । इ° । २० ग. इन्द्रियाणि । २१ क. ख. °णां विचरतां कथं । २२ क. ख. °वत्तदुपासन° । २३ क. °सो द्रवस्तथा स्वे° । २४ क. °जाः । एते त्रयोऽभिव° । २५ ख. न । २६ ख. °ति । न तूर्ध्वं ।

यत्तूर्ध्वं पादतलयोरवार्कोर्द्ध्वं च(गधश्च) पश्यति । एतस्मिन्नेव कृत्ये सा वर्तते बुद्धिरुत्तमा ॥ ५४
गुणैस्तु नीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि । मनःषष्ठानि सर्वाणि बुद्ध्या[3] भावात्कुतो गुणाः ॥ ५५
इन्द्रियाणि नरैः पञ्च षष्ठं तन्मन उच्यते । सप्तमीं बुद्धिमेवाऽऽहुः क्षेत्रज्ञं विद्धिचाष्टमम् ॥ ५६
चक्षुरालोकनायैव संशयं कुरुते मनः । बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ॥ ५७
रजस्तमश्च सत्त्वं च त्रय एते स्वयोनिजाः । समाः सर्वेषु भूतेषु तान्गुणानुपलक्षयेत् ॥ ५८
तत्र यत्प्रीतिसंयुक्तं किंचिदात्मनि लक्षयेत् । प्रशान्तमिव संयुक्तं सत्त्वं तदुपधारयेत् ॥ ५९
यत्तु संतापसंयुक्तं काये मनसि वा भवेत् । प्रवृत्तं रज इत्येवं तत्र चाप्युपलक्षयेत् ॥ ६०
यत्तु संमोहसंयुक्तमव्यक्तं विषमं भवेत् । अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ ६१
प्रहर्षः प्रीतिरानन्दं स्वाम्यं स्वस्थात्मचित्तता । अकस्माद्यदि वा कस्माद्वदन्ति सात्त्विकान्गुणान्
अभिमानो मृषावादो लोभो मोहस्तथा क्षमा । लिङ्गानि रजसस्तानि वर्तन्ते हेतुतत्त्वतः ६३
तथा मोहः प्रमादश्च तन्द्री निद्राऽप्रबोधिता । कथंचिदभिवर्तन्ते विज्ञेयास्तामसा गुणाः ॥ ६४
मनः प्रसृजते भावं बुद्धिरध्यवसायिनी[11] । हृदयं प्रियमेवेह त्रिविधा कर्मचोदना ॥ ६५
इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा परः[12] स्मृतः ॥ ६६
बुद्धिरात्मा मनुष्यस्य बुद्धिरेवाऽऽत्मनायिका । यदा विकुरुते भावं[13] तदा भवति सा मनः ॥ ६७
इन्द्रियाणां पृथग्भावाद्बुद्धिर्विकुरुते ह्यनु । शृण्वती भवति श्रोत्रं स्पृशती स्पर्श उच्यते ॥ ६८
पश्यन्ती च भवेद्दृष्टी रसन्ती रसना भवेत् । जिघ्रन्ती भवति घ्राणं बुद्धिर्विकुरुते पृथक् ॥ ६९
इन्द्रियाणि तु तान्याहुस्तेषां[15] वृत्त्या वितिष्ठति । तिष्ठति पुरुषे बुद्धिर्बुद्धिभावव्यवस्थिता[16] ॥ ७०
कदाचिल्लभते प्रीतिं कदाचिदपि शोचति । न सुखेन च दुःखेन कदाचिदिह मुह्यते ॥ ७१
स्वयं भावात्मिका भावांस्त्रीनेतानतिवर्तते । सरितां सागरो भर्ता महावेलामिवोर्मिमान् ॥ ७२
यदा प्रार्थयते किंचित्तदा भवति सा मनः । अधिष्ठाने च वै बुद्ध्या पृथगेतानि संस्मरेत् ॥ ७३
इन्द्रियाणि च मेध्यानि विचेतव्यानि कृत्स्नशः । सर्वाण्येवानुपूर्वेण यद्यदा च विधीयते ॥ ७४
अविभागगमना[21] बुद्धिर्भावो मनसि वर्तते । प्रवर्तमानस्तु[22] रजः सत्त्वमप्यतिवर्तते ॥ ७५
ये वै भावेन वर्तन्ते सर्वेष्वेतेषु ते त्रिषु । अन्वर्थान्संप्रवर्तन्ते रथनेमिमरा इव ॥ ७६
प्रदीपार्थं[24] मनः कुर्यादिन्द्रियैर्बुद्धिसत्तमैः । निश्चरद्भिर्[25]यथायोगमुदासीनैर्यदृच्छया ॥ ७७
एवंस्वभावमेवेदमिति बुद्ध्वा[26] न मुह्यति । अशोचन्संप्रहृष्यंश्च नित्यं विगतमत्सरः ॥ ७८
न ह्यात्मा शक्यते द्रष्टुमिन्द्रियैः कामगोचरैः । प्रवर्तमानैरनेकैर्दुर्धरैरकृतात्मभिः ॥ ७९
तेषां तु मनसा रश्मीन्यदा सम्यङ्नियच्छति । तदा प्रकाशतेऽस्याऽऽत्मा दीपदीप्ता यथाऽऽ- ८०
कृतिः ॥

---

१ क. गुणान्ते नी° । ख. गुणागुणाय° । २ क. बुद्धिभाजः कृता गु° । ३ ग भावे ततो । ४ ग. °लोचना° । ५ क. ख. समः । ६ ख. °तु व्यामो° । ७ ग. °व्यक्तविषयं भ° । ८ क. अस्माकं यदि । ९ ख. °नो विवादो वा लो° । १० ग. °न्ते देहत° । ११ ग. °नी । कृत्यं प्रियाप्रिये चैव त्रि° । १२ ख. परो मतः । १३ ख. वाचं । १४ क. मनः । १५ ख. °स्तेषु दृश्योऽवति° । ग. °स्तेषु दृश्ये च ति° । १६ क. °द्धिः सदा भा° । १७ ख. ग. °नभिव° । १८ क. सागरः । विष्टा- विनियवै भर्त्रा पृ° । ख. सागरः । आविष्टामिव वै बुद्ध्या पृ° । १९ क. °शः । भूतान्येवा° । २० क. यथावदभिधी° । ३१ ख. °मतो बु° । २२ क. °मानोरुर° । ख. °मानं तु र° । २३ ग. °ते । यैरेव भावा वर्तन्ते भावाः सर्वेषु तेषु च । भ° । २४ क. प्रदीप्त्यर्थं । २५ क. निश्चसद्भि° । २६ ख. ग. बुद्ध्या । २७ ख. °षां सुम° ।

सर्वेषामेव भूतानां तमस्युपगते यथा । प्रकाशं भवते सर्वं तथैवमुपधार्यताम् ॥ ८१
यथा वारिचरः पक्षी न लिप्यति जले चरन् । विमुक्तात्मा तथा योगी गुणदोषैर्न लिप्यते ८२
एवमेव कृतप्रज्ञो न दोषैर्विषयांश्चरन् । असज्जमानः सर्वेषु न कथंचित्प्रलिप्यते ॥ ८३
त्यक्त्वा पूर्वकृतं कर्म रतिर्यस्य सदाऽऽत्मनि । सर्वभूतात्मभूतस्य गुणसङ्गेन सज्जतः ॥ ८४
स्वयमात्मा प्रसवति गुणेष्वपि कदाचन । न गुणा विदुरात्मानं गुणान्वेद स सर्वदा ॥ ८५
परिदध्याद्गुणानां स द्रष्टा चैव यथातथम् । सत्त्वक्षेत्रज्ञयोरेवमन्तरं लक्षयेन्नरः ॥ ८६
सृजते तु गुणानेक एको न सृजते गुणान् । पृथग्भूतौ प्रकृत्यैतौ संप्रयुक्तौ च सर्वदा ॥ ८७
यथाऽश्मना हिरण्यस्य संप्रयुक्तौ तथैव तौ । मशकोदुम्बरौ वाऽपि संप्रयुक्तौ यथा सह ॥ ८८
इषिका वा यथा मुञ्जे पृथक्च सह चैव ह । तथैव सहितावेतौ अन्योन्यस्मिन्प्रतिष्ठितौ ॥ ८९

इति श्रीमहापुराणे आदिब्राह्मे व्यासर्षिसंवादे षट्त्रिंशदधिक-
द्विशततमोऽध्यायः ॥ २३६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३२१४

अथ सप्तत्रिंशदधिकद्विशततमोऽध्यायः ।

व्यास उवाच—

सृजते तु गुणान्सत्त्वं क्षेत्रज्ञस्त्वधितिष्ठति । गुणान्विक्रियतः सर्वानुदासीनवदीश्वरः ॥ १
स्वभावयुक्तं तत्सर्वं यदिमान्सृजते गुणान् । ऊर्णनाभिर्यथा सूत्रं सृजते तद्गुणांस्तथा ॥ २
प्रवृत्ता न निवर्तन्ते प्रवृत्तिर्नोपलभ्यते । एवमेके व्यवस्यन्ति निवृत्तिमिति चापरे ॥ ३
उभयं संप्रधार्यैतदध्यवस्येद्यथामति । अनेनैव विधानेन भवेद्वै संशयो महान् ॥ ४
अनादिनिधनो ह्यात्मा तं बुद्ध्वा विहरेन्नरः[10] । अक्रुध्यन्नप्रहृष्यंश्च नित्यं विगतमत्सरः ॥ ५
इत्येवं हृदये सर्वो [11]बुद्धिचिन्ता[12]मयं दृढम् । अनित्यं सुखमासीनम[13]शोच्यं छिन्नसंशयः ॥ ६
तरयेत्प्रच्युतां पृथ्वीं यथा पूर्णां नदीं नराः । अवगाह्य च विद्वांसो विप्रा लोलमिमं तथा[14] ॥ ७
न तु तप्यति वै विद्वान्स्थले चरति तत्त्ववित् । एवं विचिन्त्य चाऽऽत्मानं केवलं ज्ञानमात्मनः ८
*तां(तं) तु बुद्ध्वा नरः सर्गं भूतानामागतिं गतिम् । समचेष्टश्च वै सम्यग्लभते शममुत्तमम् ॥ ९
एतद्धि जन्मसामग्र्यं ब्राह्मणस्य विशेषतः । आत्मज्ञानसमस्नेहपर्याप्तं तत्परायणम्[15] ॥ १०
तत्त्वं बुद्ध्वा भवेद्बुद्धः किमन्य[16]द्[17]बुद्धलक्षणम् । विज्ञायैतद्विमुच्यन्ते कृतकृत्या मनीषिणः ॥ ११
न भवति विदुषां महद्भयं यदविदुषां सुमहद्भयं परत्र ।
न हि गतिरधिकाऽस्ति कस्यचिद्भवति हि या विदुषः सनातनी ॥ १२

* एतच्छ्लोकद्वयं नास्ति ग. पुस्तके ।

१ ग. °तः । मूर्तिमा° । २ ग. प्रसरति । ३ ग. गुणानपि । ४ क. ख. कथंचन । ५ क. ख. तद्वश । ६ ख. °यते स° । ७ क. यदात्मा सृज° । ८ ग. प्रध्वस्ता । ९ क. एकमेव व्य° । १० ग. विरहेन्न° । ११ क. बुद्धिं चि° । १२ क. °मयां दृढाम् । १३ क. ख. °मसाध्यं छि° । १४ क. °था । नानुलिप्येत वै । १५ क. ख. °म् । एतद्बुद्ध्वा । १६ क. °न्यद्बोधल° । १७ ग. °द्बुद्धिल° ।

लोके मातरमसूयते नरस्तत्र देवमनिरीक्ष्य शोचते ।
तत्र चेत्कुशलो न शोचते ये विदुस्तदुभयं कृताकृतम् ॥ १३
यत्करोत्यनभिसंधिपूर्वकं तच्च निन्दयति यत्पुरा कृतम् ।
यत्प्रियं तदुभयं न वाऽप्रियं तस्य तज्जनयतीह कुर्वतः ॥ १४

मुनय ऊचुः—

यस्माद्धर्मात्परो धर्मो विद्यते नेह कश्चन । यो विशिष्टश्च भूतेभ्यस्तद्भवान्प्रब्रवीतु नः ॥ १५

व्यास उवाच—

धर्मं च संप्रवक्ष्यामि पुराणमृषिभिः स्तुतम् । विशिष्टं सर्वधर्मेभ्यः शृणुध्वं मुनिसत्तमाः ॥ १६
इन्द्रियाणि प्रमाथीनि बुद्ध्या संयम्य तत्त्वतः । सर्वतः प्रसृतानीह पिता बालानिवाऽऽत्मजान् ॥
मनसश्चेन्द्रियाणां चाप्यैकाग्र्यं परमं तपः । विज्ञेयः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥ १८
तानि सर्वाणि संधार्य मनःषष्ठानि मेधया । आत्मतृप्तः स एवाऽऽसीद्बहुचिन्त्यमचिन्तयन् ॥ १९
गोचरेभ्यो निवृत्तानि यदा स्थास्यन्ति वेश्मनि । तदा चैवाऽऽत्मनाऽऽत्मानं परं द्रक्ष्यथ शाश्वतम्
सर्वात्मानं महात्मानं विधूममिव पावकम् । प्रपश्यन्ति महात्मानं ब्राह्मणा ये मनीषिणः ॥ २१
यथा पुष्पफलोपेतो बहुशाखो महाद्रुमः । आत्मनो नाभिजानीते क मे पुष्पं क मे फलम् ॥ २२
एवमात्मा न जानीते क गमिष्ये कुतोऽन्वहम् । अन्यो ह्यस्यान्तरात्माऽस्ति यः सर्वमनुपश्यति ॥
ज्ञानदीपेन दीप्तेन पश्यत्यात्मानमात्मना । दृष्ट्वाऽऽत्मानं तथा यूयं विरागा भवत द्विजाः ॥ २४
विमुक्ताः सर्वपापेभ्यो मुक्तत्वच इवोरगाः । परां बुद्धिमवाप्येहाप्यचिन्ता विगतज्वराः ॥ २५
सर्वतःस्रोतसं घोरां नदीं लोकप्रवाहिणीम् । पञ्चेन्द्रियग्राहवतीं मनःसंकल्परोधसम् ॥ २६
लोभमोहतृणच्छन्नां कामक्रोधसरीसृपाम् । सत्यतीर्थानृतक्षोभां क्रोधपङ्कां सरिद्वराम् ॥ २७
अव्यक्तप्रभवां शीघ्रां कामक्रोधसमाकुलाम् । प्रतरध्वं नदीं बुद्ध्या दुस्तरामकृतात्मभिः ॥ २८
संसारसागरगमां योनिपातालदुस्तराम् । आत्मजन्मोद्भवां तां तु जिह्वावर्तदुरासदाम् ॥ २९
यां तरन्ति कृतप्रज्ञा धृतिमन्तो मनीषिणः । तां तीर्णः सर्वतो मुक्तो विधूतात्माऽऽत्मवाञ्शुचिः
उत्तमां बुद्धिमास्थाय ब्रह्मभूयाय कल्पते । उत्तीर्णः सर्वसंक्लेशान्प्रसन्नात्मा विकल्मषः ॥ ३१
भूयिष्ठानीव भूतानि सर्वस्थानान्निरीक्ष्य च । अक्रुध्यन्नप्रसीदंश्च ननृशंसमतिस्तथा ॥ ३२
ततो द्रक्ष्यथ सर्वेषां भूतानां प्रभवाप्ययम् । एतद्धि सर्वधर्मेभ्यो विशिष्टं मेनिरे बुधाः ॥ ३३
धर्मं धर्मभृतां श्रेष्ठा मुनयः सत्यदर्शिनः । आत्मानो व्यापिनो विप्रा इति पुत्रानुशासनम् ॥ ३४
प्रयताय प्रवक्तव्यं हितायानुगताय च । आत्मज्ञानमिदं गुह्यं सर्वगुह्यतमं महत् ॥ ३५
अब्रवं यदहं विप्रा आत्मसाक्षिकमञ्जसा । नैव स्त्री न पुमानेवं न चैवेदं नपुंसकम् ॥ ३६
अदुःखमसुखं ब्रह्म भूतभव्यभवात्मकम् । नैतज्ज्ञात्वा पुमान्स्त्री वा पुनर्भवमवाप्नुयात् ॥ ३७
यथा मतानि सर्वाणि तथैतानि यथा तथा । कथितानि मया विप्रा भवन्ति न भवन्ति च ॥ ३८
तत्प्रीतियुक्तेन गुणान्वितेन पुत्रेण सत्पुत्रदयान्वितेन ।
दृष्ट्वा हितं प्रीतमना यदर्थं ब्रूयात्सुतस्येह यदुक्तमेतत् ॥ ३९

---

१ क. लोकमा° । २ ग. °स्तत्तमेव च नि° । ३ क. बुद्ध्वा । ४ क. ख. °नि पर्वतस्थो नि° । ५ क. ख. सत्यवादिनः । ६ ग. इदं विप्रानु° । ७ क. °त्मशान्तिकरं परम् । नै° । ८ ग. गतानि ।

मुनय ऊचुः—

मोक्षः पितामहेनोक्त उपायान्नानुपायतः । तमुपायं यथान्यायं श्रोतुमिच्छामहे मुने ॥ ४०

व्यास उवाच—

अस्मासु तन्महाप्राज्ञा युक्तं निपुणदर्शनम् । यदुपायेन सर्वार्थान्मृगयध्वं सदाऽनघाः ॥ ४१

घटोपकरणे बुद्धिर्घटोत्पत्तौ न सा मता । एवं धर्माद्युपायार्थे नान्यधर्मेषु कारणम् ॥ ४२

पूर्वे समुद्रे यः पन्था न स गच्छति पश्चिमम् । एकः पन्था हि मोक्षस्य तच्छृणुध्वं ममानघाः ४३

क्षमया क्रोधमुच्छिन्द्यात्कामं संकल्पवर्जनात् । सत्त्वसंसेवनाद्धीरो निद्रामुच्छेत्तुमर्हति ॥ ४४

अप्रमादाद्भयं रक्षेद्रक्षेत्क्षेत्रं च संविदम् । इच्छां द्वेषं च कामं च धैर्येण विनिवर्तयेत् ॥ ४५

निद्रां च प्रतिभां चैव ज्ञानाभ्यासेन तत्त्ववित् । उपद्रवांस्तथा योगी हितजीर्णमिताशनात् ॥४६

लोभं मोहं च संतोषाद्विषयांस्तत्त्वदर्शनात् । अनुक्रोशादधर्मं च जयेद्धर्ममुपेक्षया ॥ ४७

आयत्या च जयेदाशां सामर्थ्यं सङ्गवर्जनात् । अनित्यत्वेन च स्नेहं क्षुधां योगेन पण्डितः ॥४८

कारुण्येनाऽऽत्मनाऽऽत्मानं तृष्णां च परितोषतः । उत्थानेन जयेत्तन्द्रीं वितर्कं निश्चयाज्जयेत् ॥

मौनेन बहुभाषां च शौर्येण च भयं जयेत् । यच्छेद्वाङ्मनसी बुद्ध्या तां यच्छेज्ज्ञानचक्षुषा ॥५०

ज्ञानमात्मा महान्यच्छेत्तं यच्छेच्छान्तिरात्मनः । तदेतदुपशान्तेन बोद्धव्यं शुचिकर्मणा ॥ ५१

योगदोषान्समुच्छिद्य पञ्च यान्कवयो विदुः । कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम् ५२

परित्यज्य निषेवेत यथावद्योगसाधनात् । ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा ॥ ५३

शौचमाचारतः शुद्धिरिन्द्रियाणां च संयमः । एतैर्विवर्धते तेजः पाप्मानमुपहन्ति च ॥ ५४

सिध्यन्ति चास्य संकल्पा विज्ञानं च प्रवर्तते । धूतपापः स तेजस्वी लघ्वाहारो जितेन्द्रियः ॥५५

कामक्रोधौ वशे कृत्वा निर्विशेद्ब्रह्मणः पदम् । अमूढत्वमसङ्गित्वं कामक्रोधविवर्जनम् ॥ ५६

अदैन्यमनुदीर्णत्वमनुद्वेगो व्यवस्थितिः । एष मार्गो हि मोक्षस्य प्रसन्नो विमलः शुचिः ॥

तथा वाक्कायमनसां नियमाः कामतोऽव्ययाः ॥ ५७

इति श्रीमहापुराणे आदिब्राह्मे सांख्ययोगनिरूपणं नाम सप्तत्रिंशदधिक-
द्विशततमोऽध्यायः ॥ २३७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३२७१

---

अथाष्टात्रिंशदधिकद्विशततमोऽध्यायः ।

---

मुनय ऊचुः—

सांख्यं योगस्य नो विप्र विशेषं वक्तुमर्हसि । तत्र धर्मज्ञ सर्वं हि विदितं मुनिसत्तम ॥ १

व्यास उवाच—

सांख्याः सांख्यं प्रशंसन्ति योगान्योगविदुत्तमाः । वदन्ति कारणैः श्रेष्ठैः स्वपक्षोद्भवनाय वै ॥

अनीश्वरः कथं मुच्येदित्येवं मुनिसत्तमाः । वदन्ति कारणैः श्रेष्ठं योगं सम्यङ्मनीषिणः ॥ ३

---

१ ग. मुक्तं । २ क. °र्थान्प्राप्नुवध्वं । ३ क. °घटेत्युक्ते न । ४ ख. नान्याध° । ५ क. °क्षणात् । आ° । ६ क. आपत्त्या । ७ ख. द. °दाशामर्थं सङ्गविव° । ८ ग. उत्साने° । ९ क. °न्द्रां द्वापरं धर्मनिर्णयात् । मौ° । १० ख. °साधनम् । ध्या° । ११ ग. °गा योगं द्विजातयः । वि° ।

*वदन्ति कारणं वेदं सांख्यं सम्यग्द्विजातयः । विज्ञायेह गतीः सर्वा [1]विरक्तो विषयेषु यः ४
ऊर्ध्वं स देहात्सुव्यक्तं विमुच्येदिति नान्यथा । एतदाहुर्महाप्राज्ञाः सांख्यं वै मोक्षदर्शनम् ॥ ५
स्वपक्षे कारणं ग्राह्यं समर्थं वचनं हितम् । +शिष्टानां हि मतं ग्राह्यं भवद्भिः शिष्टसंमतैः ॥ ६
प्रत्यक्षं हेतवो योगाः सांख्याः शास्त्रविनिश्च[3]याः । उभे चैते मते तत्त्वे समवेते द्विजोत्तमाः ॥ ७
उभे चैते मते ज्ञाते मु[4]नीन्द्राः शिष्टसंमते । अनुष्ठिते यथाशास्त्रं नयेतां परमां गतिम् ॥ ८
तुल्यं शौचं तयोर्युक्तं दया भूतेषु चा[5]नघाः । व्रतानां धारणं तुल्यं दर्शनं त्वसमं तयोः ॥ ९

मुनय ऊचुः—

यदि तुल्यं व्रतं शौचं दया चात्र महामुने । तुल्यं तद्दर्शनं कस्मात्तन्नो ब्रूहि द्विजोत्तम ॥ १०

व्यास उवाच—

रागं मोहं तथा स्नेहं कामं क्रोधं च केवलम् । योगास्थिरोदितान्दोषान्पञ्चैतान्प्राप्नुवन्ति तान् ॥
यथा वाऽनिमिषाः स्थूलं जालं छित्त्वा पुनर्जलम् । प्राप्नुवन्ति तथा योगात्तत्पदं वीतकल्मषाः ॥
तथैव वागुरां छित्त्वा बलवन्तो यथा मृगाः । प्राप्नुयुर्विमलं मार्गं विमुक्ताः सर्वबन्धनैः ॥ १३
लोभजानि तथा विप्रा बन्धनानि बलान्विताः । छित्त्वा योगात्परं मार्गं गच्छन्ति विमलं शुभम्
अचलास्त्वाविला विप्रा वागुरासु तथाऽपरे । विनश्यन्ति न संदेहस्तद्वद्योगबलादृते ॥ १५
बलहीनाश्च विप्रेन्द्रा यथा जालं गता द्विजाः । बन्धं न गच्छन्त्यनघा योगास्ते तु सुदुर्लभाः १६
यथा च शकुनाः सूक्ष्मं प्राप्य जालमरिंदमाः । तत्राशक्ता विपद्यन्ते मुच्यन्ते तु बलान्विताः ॥
कर्मजैर्बन्धनैर्बद्धास्तद्वद्योगपरा द्विजाः । अबला न विमुच्यन्ते मुच्यन्ते च बलान्विताः ॥ १८
अल्पकश्च यथा विप्रा वह्निः शाम्यति दुर्बलः । आक्रान्त इन्धनैः स्थूलैस्तद्वद्योगबलः स्मृतः १९
स एव च तदा विप्रा वह्निर्जातबलः पुनः । समीरणगतः कृत्स्नां दहेत्क्षिप्रं महीमिमाम् ॥ २०
तत्त्वज्ञानबलो योगी दीप्ततेजा महाबलः । अन्तकाल इवाऽऽदित्यः कृत्स्नं संशोषयेज्जगत् ॥ २१
दुर्बलश्च यथा विप्राः स्रोतसा ह्रियते[11] नरः । बलहीनस्तथा योगी [12]विषयैर्ह्रियते च सः ॥ २२
तदेव तु यथा स्रोतो विष्कम्भयति वारणः । तद्वद्योगबलं लब्ध्वा न भवेद्विषयैर्हृतः ॥ २३
विशन्ति वा वशे[13]द्वाऽथ योगाद्योगबलान्विताः । प्रजापतीन्मनून्सर्वान्महाभूतानि चेश्वराः ॥ २४
न यमो नान्तकः क्रु[14][illegible] मृत्युर्भीमविक्रमः[15] । विशन्ते तद्द्विजाः सर्वे योगस्यामिततेजसः ॥ २५
आत्[16]मनां च सह[illegible]हूनि द्विजसत्तमाः । योगं कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥ २६
प्राप्नुयाद्विषयान्कश्चि[17]त्पुनश्चोग्रं तपश्चरेत् । संक्षिप्येच्च पुनर्विप्राः सूर्यस्तेजोगुणानिव ॥ २७
बलस्थस्य हि योगस्य ब[18]लार्थं मुनिसत्तमाः । विमोक्षप्रभवं विष्णुमुपपन्नमसंशयम् ॥ २८
बलानि योगप्रोक्तानि मयैतानि द्विजोत्तमाः । निदर्शनार्थं सूक्ष्माणि वक्ष्यामि च पुनर्द्विजाः २९
आत्मनश्च समाधाने धारणां प्रति वा द्विजाः । निदर्शनानि सूक्ष्माणि शृणुध्वं मुनिसत्तमाः ३०
अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहितः । युक्तः सम्यक्तथा योगी मोक्षं प्राप्नोत्यसंशयम् ॥

* इदमर्धं क. पुस्तके नास्ति ।+ इदमर्धं क. पुस्तके नास्ति ।

१ ख. चरित्वा । २ ग. °त्यक्षहेतुका यो° । ३ क. °श्चये । उ° ४ ख. मुनिभिः । ५ ग. यदा । ६ क. ख. मानवाः । ७ ख. योगपरं । ८ क. ख. अबला° । ९ क. ख. दुर्लभः । १० क. तद्वज्ज्ञान° । ११ ग. ह्रीयते । १२ ग. °यैर्ह्रीय° । १३ क. °शा नार्यो यो° । १४ क. क्रूरो । १५ ख. °मः । ईशतस्तु द्विजाः । १६ ख. °त्मना च । १७ ग. बन्धने यस्य स° । १८ क. ख. °शयः । ब° ।

स्नेहपात्रे यथा पूर्णे मन आधाय निश्चलम् । पुरुषो युक्त आरोहेत्सोपानं युक्तमानसः ॥ ३२
मुक्तस्तथाऽयमात्मानं योगं तद्वत्सुनिश्चलम् । करोत्यमलमात्मानं भास्करोपमदर्शने ॥ ३३
यथा च नावं विप्रेन्द्राः कर्णधारः समाहितः । महार्णवगतां शीघ्रं नयेद्विप्रास्तु पत्तनम् ॥ ३४
तद्वदात्मसमाधानं युक्तो योगेन योगवित् । दुर्गमं स्थानमाप्नोति हित्वा देहमिमं द्विजाः ॥ ३५
सारथिश्च यथा युक्तः सदश्वान्सुसमाहितः । देशमिष्टं नयत्याशु धान्विनं पुरुषर्षभम् ॥ ३६
तथैव च द्विजा योगी धारणासु समाहितः । प्राप्नोत्याशु परं स्थानं लक्ष्यमुक्त इवाऽऽशुगः ॥ ३७
आविश्याऽऽत्मनि चाऽऽत्मानं योऽवतिष्ठति सोऽचलः । पाशं हत्वेव मीनानां पदमाप्नोति सोऽजरम् ॥
नाभ्यां शीर्षे च कुक्षौ च हृदि वक्षसि पार्श्वयोः । दर्शने श्रवणे वाऽपि घ्राणे चामितविक्रमः ॥
स्थानेष्वेतेषु यो योगी महाव्रतसमाहितः । आत्मना सूक्ष्ममात्मानं युङ्क्ते सम्यग्द्विजोत्तमाः ॥ ४०
सुशीघ्रमचलप्रख्यं कर्म दग्ध्वा शुभाशुभम् । उत्तमं योगमास्थाय यदीच्छति विमुच्यते ॥ ४१

मुनय ऊचुः—

आहारान्कीदृशान्कृत्वा कानि जित्वा च सत्तम । योगी बलमवाप्नोति तद्भवान्वक्तुमर्हति ॥ ४२

व्यास उवाच—

कणानां भक्षणे युक्तः पिण्याकस्य च भो द्विजाः । स्नेहानां वर्जने युक्तो योगी बलमवाप्नुयात् ॥
भुञ्जानो यावकं रूक्षं दीर्घकालं द्विजोत्तमाः । एकाहारी विशुद्धात्मा योगी बलमवाप्नुयात् ॥ ४३
पक्षान्मासानृतूंश्चित्रान्संचरंश्च गुहास्तथा । अपः पीत्वा पयोमिश्रा योगी बलमवाप्नुयात् ॥ ४४
अखण्डमपि वा मासं सततं मुनिसत्तमाः । उपोष्य सम्यक्शुद्धात्मा योगी बलमवाप्नुयात् ॥ ४५
कामं जित्वा तथा क्रोधं शीतोष्णं वर्षमेव च । भयं शोकं तथा स्वापं पौरुषान्विषयांस्तथा ४६
अरतिं दुर्जयां चैव घोरां दृष्ट्वा च भो द्विजाः । स्पर्शं निद्रां तथा तन्द्रां दुर्जयां[11] मुनिसत्तमाः ॥
दीपयन्ति[10] महात्मानं सूक्ष्ममात्मानमात्मना । वीतरागा महाप्राज्ञा ध्यानाध्ययनसंपदा ॥ ४८
दुर्गस्त्वेष मतः पन्था ब्राह्मणानां विपश्चिताम् । यः कश्चिद्व्रजति क्षिप्रं क्षेमेण मुनिपुंगवाः ॥ ४९
यथा कश्चिद्वनं घोरं बहुसर्पसरीसृपम् । श्वभ्रवत्तोयहीनं च दुर्गमं बहुकण्टकम् ॥ ५०
अभक्तमटवीप्रायं दावदग्धमहीरुहम् । पन्थानं तस्कराकीर्णं क्षेमेणाभिपतेत्तथा ॥ ५१
योगमार्गं समासाद्य यः कश्चिद्व्रजते द्विजः । क्षेमेणोपरमेन्मार्गा[12]द्बहु[13]दोषो ऽ संमतः ॥ ५२
आस्थेयं क्षुरधारासु निशितासु द्विजोत्तमाः । धारणा सा तु योगस्य दुर्ज्ञेयम् ...त्मभिः ॥ ५३
विषमा धारणां विप्रा यान्ति वै न शुभां गतिम् । नेतृहीना यथा नावः पुरुषाणां तु वै द्विजाः ॥
यस्तु तिष्ठति योगा[14]धौ धा[15]रणासु यथाविधि । मर[16]णं जन्मदुःखित्वं सुखित्वं स विशिष्यते ॥
नानाशास्त्रेषु[17] नियतं नानामुनिनिषेवितम् । परं योगस्य पन्थानं निश्चितं[18] तं द्विजातिषु ॥ ५५

परं हि[19] तद्ब्रह्ममयं मुनीन्द्रा ब्रह्माणमीशं वरदं[20] च विष्णुम् ।
भवं च धर्मं च म[21]हानुभावं यद्ब्रह्मपुत्रान्सुमहानुभावान् ॥ ५६

---

१ ग. मुक्त । २ ख. ग. युक्तेन । ३ क. °णायां स° । ४ क. ख. °गः । अवेक्ष्याऽऽत्म° । ५ ग. नाड्यां । ६ ग. प्राणे । ७ क. योगस्य फलमाप्नो° । ८ ख. श्वासं । ९ ख. भयं । १० क. °न्ति तथाऽऽत्मा° । ११ क. ख. °संयुताः । दु° । १२ ख. °र्गाद्बंद्वदो° । १३ क. °हुपोष्यो हि सं° । १४ क. °गान्वै धा° । १५ क. °रणां तु य° । १६ क. °णं दुश्चिकित्स्यं च सु° । १७ क. ख. °षु निष्पन्नं योगेष्वेवमुदाहृतम् । १८ ख. °तं तद्द्विजा° । १९ ख. हितं ब्रह्म° । २० क. °दं वरिष्ठम् । २१ ग. महानरं ।

तमश्च कष्टं सुमहद्रजश्च सत्त्वं च शुद्धं प्रकृतिं परां च ।
सिद्धिं च देवीं वरुणस्य पत्नीं तेजश्च कृत्स्नं सुमहच्च धैर्यम् ॥ ५९
ताराधिपं खे विमलं सुतारं विश्वांश्च देवानुरगान्पितॄंश्च ।
शैलांश्च कृत्स्नानुदधींश्च वाऽचलान्नदीश्च सर्वाः सनगांश्च नागान् ॥ ६०
साध्यांस्तथा यक्षगणान्दिशश्च गन्धर्वसिद्धान्पुरुषान्स्त्रियश्च ।
परस्परं प्राप्य महान्महात्मा विशेत योगी नचिराद्विमुक्तः ॥ ६१
कथा च या विप्रवराः प्रसक्ता दैवे महावीर्यमतौ शुभेयम् ।
योगान्स सर्वानभिभूय मर्त्या नारायणं तं द्रुतमाप्नुवन्ति ॥ ६२

इति श्रीमहापुराणे आदिब्राह्मे व्यासर्षिसंवादे योगविधिनिरूपणं नामाष्टात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३३३३

---

अथैकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

मुनय ऊचुः—

सम्यक्क्रियेयं विप्रेन्द्र वर्णिता शिष्टसंमता । योगमार्गो यथान्यायं शिष्यायेह हितैषिणा ॥ १
सांख्ये त्विदानीं धर्मस्य विधिं प्रब्रूहि तत्त्वतः । त्रिषु लोकेषु यज्ज्ञानं सर्वं तद्विदितं हि ते ॥ २

व्यास उवाच—

शृणुध्वं मुनयः सर्वमाख्यानं विदितात्मनाम् । विहितं यतिभिर्वृद्धैः कपिलादिभिरीश्वरैः ॥ ३
यस्मिन्सुविभ्रमाः केचिद्दृश्यन्ते मुनिसत्तमाः । गुणाश्च यस्मिन्बहवो दोषहानिश्च केवला ॥ ४
ज्ञानेन परिसंख्याय सदोषान्विषयान्द्विजाः । मानुषान्दुर्जयान्कृत्स्नान्पैशाचान्विषयांस्तथा ॥ ५
विषयानौरगाञ्ज्ञात्वा गन्धर्वविषयांस्तथा । पितॄणां विषयाञ्ज्ञात्वा तिर्यक्त्वं चरतां द्विजाः ॥ ६
सुपर्णविषयाञ्ज्ञात्वा मरुतां विषयांस्तथा । महर्षिविषयांश्चैव राजर्षिविषयांस्तथा ॥ ७
आसुरान्विषयाञ्ज्ञात्वा वैश्वदेवांस्तथैव च । देवर्षिविषयाञ्ज्ञात्वा योगानामपि वै परान् ॥ ८
विषयांश्च प्रमाणस्य ब्रह्मणो विषयांस्तथा । आयुषश्च परं कालं लोकैर्विज्ञाय तत्त्वतः ॥ ९
सुखस्य च परं कालं विज्ञाय मुनिसत्तमाः । प्राप्तकाले च यद्दुःखं पततां विषयैषिणाम् ॥ १०
तिर्यक्त्वे पततां विप्रास्तथैव नरकेषु यत् । स्वर्गस्य च गुणाञ्ज्ञात्वा दोषान्सर्वांश्च भो द्विजाः ॥
वेदवादे च ये दोषा गुणा ये चापि वैदिकाः । ज्ञानयोगे च ये दोषा ज्ञानयोगे च ये गुणाः ॥
सांख्यज्ञाने च ये दोषांस्तथैव च गुणा द्विजाः । सत्त्वं दशगुणं ज्ञात्वा रजो नवगुणं तथा ॥ १३
तमश्चाष्टगुणं ज्ञात्वा बुद्धिं सप्तगुणां तथा । षड्गुणं च नभो ज्ञात्वा तमश्च त्रिगुणं महत् ॥ १४
द्विगुणं च रजो ज्ञात्वा सत्त्वं चैकगुणं पुनः । मार्गं विज्ञाय तत्त्वेन प्रलयप्रेक्षणेन तु ॥ १५
ज्ञानविज्ञानसंपन्नाः कारणैर्भावितात्मभिः । प्राप्नुवन्ति शुभं मोक्षं सूक्ष्मा इव नभः परम् ॥ १६

---

१ क. सुभावं । २ ग. °नभिभू° । ३ ग. सांख्यं । ४ ख. °वैसांख्यानां वि° । ५ क. °तिभिः पूर्वैः क° । ६ क. ग. °पि येश्वरात् । वि° । ७ क. गुणयोगे । ८ ख. °लये प्रेक्षणं तथा । ज्ञा° । ग. °लये प्रलयं तथा । ज्ञा° ।

रूपेण दृष्टिं संयुक्तां घ्राणं गन्धगुणेन च । शब्दग्राह्यं[1] तथा श्रोत्रं जिह्वां रसगुणेन चं ॥ १७
त्वचं स्पर्शं तथा शक्यं वायुं चैव तदाश्रितम्[2] । मोहं तमसि संयुक्तं लोभं मोहेषु संश्रितम्[3] ॥ १८
विष्णुं क्रान्ते बले शक्रं कोष्ठे सक्तं तथाऽनलम् । अप्सु देवीं समायुक्तामापस्तेजसि संश्रिताः ॥
तेजो वायौ तु संयुक्तं वायुं नभसि चाऽऽश्रितम् । नभो महति संयुक्तं[4] तमो महसि संस्थितम् ॥
रजः सत्त्वं तथा सक्तं सत्त्वं सक्तं तथाऽऽत्मनि । सक्तमात्मानमीशे च देवे नारायणे तथा २१
देवं मोक्षे च संयुक्तं ततो मोक्षं च न क्वचित् । ज्ञात्वा सत्त्वगुणं देहं वृतं षोडशभिर्गुणैः ॥ २२
स्वभावं भावनां चैव ज्ञात्वा देहसमाश्रिताम् । मध्यस्थमिव चाऽऽत्मानं पापं यस्मिन्न विद्यते ॥
द्वितीयं कर्म वै ज्ञात्वा विप्रेन्द्रा विषयैषिणाम् । इन्द्रियाणीन्द्रियार्थांश्च सर्वानात्मनि [5]संश्रितान्
दुर्लभत्वं च मोक्षस्य विज्ञाय श्रुतिपूर्वकम् । प्राणापानौ समानं च व्यानोदानौ च तत्त्वतः ॥२५
आद्यं चैवानिलं ज्ञात्वा प्रभवं चानिलं पुनः । सप्तधा तांस्तथा शेषान्सप्तधा विधिवत्पुनः ॥ २६
प्रजापतीनृषींश्चैवं[6] सर्गांश्च सुबहून्वरान् । सप्तर्षींश्च बहूञ्ज्ञात्वा राजर्षींश्च परंतपान् ॥ २७
सुरर्षीन्मरुतश्चान्यान्ब्रह्मर्षीन्सूर्यसंनिभान् । ऐश्वर्याच्च्यावितान्दृष्ट्वा कालेन महता द्विजाः ॥ २८
महतां भूतसंघानां श्रुत्वा नाशं च भो द्विजाः । गतिं वाचां शुभां[7] ज्ञात्वा अर्चार्हाः पापकर्मणाम्
वैतरण्यां च यद्दुःखं पतितानां यमक्षये । योनिषु च विचित्रासु संचारानशुभांस्तथा ॥ ३०
जठरे चाशुभे वासं शोणितोदकभाजने । श्लेष्ममूत्रपुरीषे च तीव्रगन्धसमन्विते ॥ ३१
शुक्रशोणितसंघाते मज्जास्नायुपरिग्रहे । शिराशतसमाकीर्णे नवद्वारे पुरेऽथ वै ॥ ३२
विज्ञाय[8] हितमात्मानं योगांश्च विविधान्द्विजाः । तामसानां च जन्तूनां रमणीयानृतात्मनाम् ३३
सात्त्विकानां च जन्तूनां कुत्सितं मुनिसत्तमाः । गर्हितं महतामर्थे सांख्यानां विदितात्मनाम् ३४
उपप्लवांस्तथा घोराञ्शशिनस्तेजसस्तथा । ताराणां पतनं दृष्ट्वा नक्षत्राणां च पर्ययम् ॥ ३५
[9]द्वंद्वानां विप्रयोगं च विज्ञाय कृपणं द्विजाः । अन्योन्य[10]भक्षणं दृष्ट्वा भूतानामपि चाशुभम् ॥ ३६
बाल्ये मोहं च विज्ञाय क्षयं देहस्य चाशुभम् । रागं मोहं च संप्राप्तं क्वचित्सत्त्वं समाश्रितम् ॥३७
सहस्रेषु नरः कश्चिन्मोक्षबुद्धिं समाश्रितः । दुर्लभत्वं च मोक्षस्य विज्ञानं श्रुतिपूर्वकम् ॥ ३८
बहुमानमल[11]ब्धेषु लब्धे मध्यस्थतां पुनः । विषयाणां च दौरात्म्यं विज्ञाय च पुनर्द्विजाः ॥ ३९
गतासूनां च सत्त्वानां देहान्भित्त्वा तथा शुभान् । वासं कुलेषु जन्तू[12]नां मरणाय धृतात्मनाम् ४०
सात्त्विकानां च जन्तूनां दुःखं विज्ञाय भो द्विजाः । ब्रह्मघ्नानां गतिं ज्ञात्वा पतितानां सुदारुणाम्
सुरापाने च सक्तानां ब्राह्मणानां दुरात्मनाम् । गुरुदारप्रसक्तानां गतिं विज्ञाय चाशुभाम् ॥४२
[13]जननीषु च वर्तन्ते येन सम्यग्द्विजोत्तमाः । [14]सदेवकेषु लोकेषु येन वर्तन्ति मानवाः ॥ ४३
तेन ज्ञानेन विज्ञाय गतिं चाशुभकर्मणाम् । तिर्यग्योनिगतानां च विज्ञाय च गतीः पृथक् ॥ ४४
वेद[15]वादांस्तथा चित्रा[16]नृतूनां पर्ययांस्तथा । क्षयं संवत्सराणां च मासानां च क्षयं तथा ॥ ४५
पक्षक्षयं तथा दृष्ट्वा दिवसानां च संक्षयम् । क्षयं वृद्धिं च चन्द्रस्य दृष्ट्वा प्रत्यक्षतस्तथा ॥ ४६
वृद्धिं दृष्ट्वा समुद्राणां क्षयं तेषां तथा पुनः । क्षयं धनानां दृष्ट्वा च पुनर्वृद्धिं तथैव च ॥ ४७

---

१ क. ख. शब्दशक्त्या । २ ग. सर्वेषु । ३ क. °म् । मोहेऽनलं तथा क्रान्तं बले स° । ४ ख. °क्तं ततो म° । ग. °क्तं तथा म° । ५ ख. संस्थितान् । ६ क. ख. °व मार्गांश्चैव वसुंधराम् । स° । ७ क. ख. °भां प्राप्ताः पापाश्च क° । ८ ख. °ज्ञायाहि° । ९ ख. बद्धानां । १० ख. °न्यरक्षणां ह° । ११ क. °लब्धे तु ल° । १२ ख. ग. °नां रमणीयानृतात्म° । १३ क. ख. रजनीषु । १४ क. सदैव° । १५ ख. °दविधास्त° । १६ ख. °त्रा भूतानां ।

संयोगानां तथा दृष्ट्वा युगानां च विशेषतः । [1]देहवैक्लव्यतां चैव सम्यग्विज्ञाय तत्त्वतः ॥ ४८
आत्मदोषांश्च विज्ञाय सर्वानात्मनि संस्थितान् । स्वदेहादुत्थितान्गन्धांस्तथा विज्ञाय चाशुभान्

मुनय ऊचुः—

कानुत्पातभवान्दोषान्पश्यसि ब्रह्मवित्तम । एतं नः संशयं कृत्स्नं वक्तुमर्हस्यशेषतः ॥ ५०

व्यास उवाच—

पञ्च दोषान्द्विजा देहे प्रवदन्ति मनीषिणः । मार्गज्ञाः कापिलाः सांख्याः शृणुध्वं मुनिसत्तमाः
कामक्रोधौ भयं निद्रा पञ्चमः श्वास उच्यते[2] । एते दोषाः शरीरेषु दृश्यन्ते सर्वदेहिनाम् ॥ ५२
छिन्दन्ति क्षमया क्रोधं कामं संकल्पवर्जनात् । सत्त्वसंसेवनान्निद्रामप्रमादाद्भयं तथा ॥ ५३
छिन्दन्ति पञ्चमं श्वासमल्पाहारतया द्विजाः । गुणान्गुणशतैर्ज्ञात्वा दोषान्दोषशतैरपि ॥ ५४
हेतून्हेतुशतैश्चित्रैश्चित्रान्विज्ञाय तत्त्वतः । अपां [3]फेनोपमं लोकं विष्णोर्मायाशतैः कृतम् ॥ ५५
+चित्रभित्तिप्रतीकाशं नलसारमनर्थकम् । तमःसंभ्रमितं दृष्ट्वा वर्षबुद्बुदसंनिभम् ॥ ५६
नाशप्रायं सुखाधानं नाशोत्तरमहाभयम् । रजस्तमसि संमग्नं पङ्के द्विपमिवावशम् ॥ ५७
सांख्या विप्रा महाप्राज्ञास्त्यक्त्वा स्नेहं प्रजाकृतम् । ज्ञानज्ञेयेन सांख्येन व्यापिना महता द्विजाः
राजसानशुभान्गन्धांस्तामसांश्च तथाविधान् । पुण्यांश्च सात्त्विकान्गन्धान्स्पर्शजान्देहसंश्रितान् ॥
छित्त्वाऽऽत्मज्ञानशस्त्रेण तपोदण्डेन सत्तमाः । ततो दुःखादिकं घोरं चिन्ताशोकमहाह्रदम् ॥ ६०
व्याधिमृत्युमहाघोरं महाभयमहोरगम् । तमःकूर्मं रजोमीनं प्रज्ञया संतरन्त्युत ॥ ६१
स्नेहपङ्कं जरादुर्गं स्पर्शद्वीपं द्विजोत्तमाः । कर्मागाधं सत्यतीरं[8] स्थितं व्रतमनीषिणः ॥ ६२
हर्षसंघमहावेगं नानारससमाकुलम् । नानाप्रीतिमहारत्नं दुःखज्वरसमीरितम् ॥ ६३
शोकतृष्णामहावर्तं तीक्ष्णव्याधिमहारुजम् । अस्थिसंघातसंघट्टं श्लेष्मयोगं द्विजोत्तमाः ॥ ६४
दानमुक्ताकरं घोरं शोणितोद्गारविद्रुमम् । हसितोत्कुष्टनिर्घोषं नानाज्ञानसुदुष्करम् ॥ ६५
रोदनाश्रुमलक्षारं सङ्गयोगपरायणम्[9] । प्रलब्ध्वा जन्मलोको यं पुत्रबान्धवपत्तनम् ॥ ६६
*अहिंसासत्यमर्यादं प्राणयोगमयोर्मिलम्[11] । वृन्दानुगामिनं क्षीरं सर्वभूतपयोदधिम्[12] ॥ ६७
मोक्ष[13]दुर्लभविषयं वाडवासुखसागरम् । तरन्ति यतयः सिद्धा ज्ञानयोगेन चानघाः ॥ ६८
[14]तीर्त्वा च दुस्तरं जन्म विशन्ति विमलं नभः । ततस्तान्सुकृतीञ्ज्ञात्वा सूर्यो वहति रश्मिभिः ॥
पद्मतन्तुवदाविश्य प्रवहन्विषयान्द्विजाः । तत्र तान्प्रवहो वायुः प्रतिगृह्णाति चानघाः ॥ ७०
वीतरागान्यतीन्सिद्धान्वीर्ययुक्तांस्तपोधनान् । सूक्ष्मः शीतः सुगन्धश्च सुखस्पर्शश्च भो द्विजाः ॥
सप्तानां मरुतां श्रेष्ठो लोकान्गच्छति यः शुभान् । स तान्वहति विप्रेन्द्रा नभसः परमां गतिम् ॥
[16]नभो वहति लोकेशाव्रजसः परमां गतिम् । रजो वहति विप्रेन्द्राः सत्त्वस्य परमां गतिम् ॥ ७३
सत्त्वं वहति शुद्धात्मा परं नारायणं प्रभुम् । प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ॥ ७४

---

+ इदमर्धं नास्ति क. पुस्तके । * इत आरभ्य सार्धः श्लोकः क. पुस्तके न ।

---

१ क. ख. अहंवक्तव्यतां । २ क. °ते । पञ्च विध्वंसकर्तारो वर्तन्ते । ख. °ते । योगविध्वंसकर्तारो वर्तन्ते । ३ क. व्योमपरं । ४ ख. चिन्ताभि° । ५ ख. सुखासीनं । ६ क. ख. °ह्यान्विप्रा° । ७ क. ख. °ज्ञान्स तानाह प्रजापतिः । अनेन दोषान्सांख्ये° । ८ क. ख. °रं सत्यत्र° । ९ क. ख. °म् । पुनर्वा ज° । १० क. ख. °त्रवधूचयंतपरम् । ११ क. °म् । वेदानुपायिमक्षी° । १२ ग. °म् । महोक्ष° । १३ ग. °विषं वडवामुख° । १४ ख. भित्वा । १५ क. तमः । ख. ततः । १६ ख. तमो ।

परमात्मानमासाद्य तद्भूता यतयोऽमलाः । अमृतत्वाय कल्पन्ते न निवर्तन्ति च द्विजाः ॥ ७५
परमा सा गतिर्विप्रा निर्द्वंद्वानां महात्मनाम् । सत्यार्जवरतानां वै सर्वभूतदयावताम् ॥ ७६

मुनय ऊचुः—

स्थानमुत्तममासाद्य भगवन्तं स्थिरव्रताः । आजन्ममरणं वा ते[1] रमन्ते तत्र वा न वा ॥ ७७
यदत्र तथ्यं तत्त्वं नो यथावद्वक्तुमर्हसि । त्वदृते मानवं नान्यं प्रष्टुमर्हाम सत्तम ॥ ७८
मोक्षदोषो[2] महानेष प्राप्य सिद्धिं गतानृषीन् । यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे ॥ ७९
प्रवृत्तिलक्षणं धर्मं पश्याम परमं द्विजे[3] । मग्नस्य हि परे ज्ञाने किंतु दुःखान्तरं भवेत् ॥ ८०

व्यास उवाच—

यथान्यायं मुनिश्रेष्ठाः प्रश्नः पृष्टश्च संकटः । बुधानामपि संमोहः प्रश्नेऽस्मिन्मुनिसत्तमाः ॥ ८१
अत्रापि तत्त्वं परमं शृणुध्वं वचनं मम । बुद्धिश्च परमा यत्र[4] कपिलानां महात्मनाम् ॥ ८२
इन्द्रियाण्यपि बुध्यन्ते स्वदेहं[5] देहिनां[6] द्विजाः । करणान्यात्मनस्तानि सूक्ष्मं[7] पश्यन्ति तैस्तु सः ॥ ८३
आत्मना विप्रहीणानि काष्ठकुड्यसमानि[8] तु । विनश्यन्ति न संदेहो वेला इव महार्णवे ॥ ८४
इन्द्रियैः सह सुप्तस्य देहिनो[9] द्विजसत्तमाः[10] । सूक्ष्मश्चरति सर्वत्र नभसीव समीरणः ॥ ८५
स पश्यति यथान्यायं[11] स्मृत्वा स्पृशति चानघाः । बुध्यमानो यथापूर्वमखिलेनेह भो द्विजाः ॥ ८६
इन्द्रियाणि ह सर्वाणि स्वे स्वे स्थाने यथाविधि । अनीशत्वात्प्रलीयन्ते सर्पा विषहता इव ॥ ८७
इन्द्रियाणां तु सर्वेषां स्वस्थानेष्वेव सर्वशः । आक्रम्य गतयः सूक्ष्माव(श्च)रत्यात्मा न संशयः ॥
सत्त्वस्य च गुणान्कृत्स्नान्रजसश्च गुणान्पुनः । गुणांश्च तमसः सर्वान्गुणान्बुद्धेश्च सत्तमाः ॥ ८९
गुणांश्च मनसश्चापि नभसश्च गुणांस्तथा । गुणान्वायोश्च सर्वज्ञाः स्नेहजांश्च गुणान्पुनः ॥ ९०
अपां गुणास्तथा विप्राः पार्थिवांश्च गुणानपि । सर्वानेव गुणैर्व्याप्य[12] क्षेत्रज्ञेषु द्विजोत्तमाः ॥ ९१
आत्मा चरति[13] क्षेत्रज्ञः कर्मणा च शुभाशुभे[14][15] । शिष्या इव महात्मानमिन्द्रियाणि च तं द्विजाः ॥ ९२
*प्रकृतिं चाप्यतिक्रम्य शुद्धं सूक्ष्मं परात्परम् । नारायणं महात्मानं निर्विकारं परात्परम् ॥ ९३
विमुक्तं सर्वपापेभ्यः प्रविष्टं च ह्यनामयम् । परमात्मानमगुणं निर्वृतं तं च सत्तमाः ॥ ९४
श्रेष्ठं तत्र मनो विप्रा इन्द्रियाणि च भो द्विजाः । आगच्छन्ति यथाकालं गुरोः संदेशकारिणः[16] ॥
शक्यं वाऽल्पेन कालेन शान्तिं प्राप्तुं[17] गुणांस्तथा[18] । एवमुक्तेन विप्रेन्द्राः सांख्ययोगेन मोक्षिणीम्[19]
सांख्या विप्रा महाप्राज्ञा गच्छन्ति परमां गतिम् । ज्ञानेनानेन विप्रेन्द्रास्तुल्यं ज्ञानं न विद्यते ॥ ९७
अत्र वः संशयो मा भूज्ज्ञानं सांख्यं परं मतम् । अक्षरं ध्रुवमेवोक्तं पूर्वं ब्रह्म सनातनम् ॥ ९८
अनादिमध्यनिधनं निर्द्वंद्वं कर्तृ शाश्वतम् । कूटस्थं चैव नित्यं च यद्वदन्ति शमात्मकाः ॥ ९९
यतः सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः । एवं शंसन्ति शास्त्रेषु प्रवक्तारो महर्षयः ॥ १००
सर्वे विप्राश्च वेदाश्च तथा सामविदो जनाः । ब्रह्मण्यं परमं देवमनन्तं परमाच्युतम् ॥ १०१

* एतदादि सार्धं श्लोकद्वयं ग. पुस्तके नास्ति ।

१ ग. ते स्मरन्त्यत्र सदाऽनघाः । य° । २ ग. मोक्षलाभो । ३ ख. °ज । यस्य हिंसापरं ज्ञानं किं° । ४ क. ख. °त्र जायते हि म° । ५ क. स्वदेहे । ६ ख. °देहस्थानि भो द्वि° । ७ ख. सूक्ष्मः । ८ क. ख. पापकर्मकृतानि । ९ क. °नो व्याकुलस्य तु । सू° । १० क. °माः । मनो भ्रमति । ११ ग. °यं स्पर्शान्स्पृश° । १२ क. गुणान्व्याप्य । १३ ग. च याति । १४ ख. °भान्गुणान् । शि° । १५ क. °शुभम् । शि° । १६ क. ख. °देहका° । १७ क. °न प्राप्तश्चाऽऽप्तगु° ख. °न प्राप्तुं प्राप्ता गुणात्मनाम् । ए° । १८ ग. प्राप्तिं गुणार्थिना । ए° । १९ क. ख. °म् । शीतोष्णादि परित्यज्य ग° ।

प्रार्थयन्तश्च तं विप्रा वदन्ति गुणबुद्धयः। सम्यगुक्तास्तथा योगाः सांख्याश्चामितदर्शनाः १०२
अमूर्तिस्तस्य विप्रेन्द्राः सांख्यं मूर्तिरिति श्रुतिः । अभिज्ञानानि तस्याऽऽहुर्महान्ति मुनिसत्तमाः
द्विविधानि हि भूतानि पृथिव्यां द्विजसत्तमाः । अगम्यगम्यसंज्ञानि गम्यं तत्र विशिष्यते १०४
ज्ञानं महद्यद्धि महत्सु विप्रा वेदेषु सांख्येषु तथैव योगे ।
यच्चापि दृष्टं विविधं पुराणे सांख्यागतं तन्निखिलं मुनीन्द्राः ॥ १०५
यच्चेतिहासेषु महत्सु दृष्टं यथार्थशास्त्रेषु विशिष्टदृष्टम् ।
ज्ञानं च लोके यदिहास्ति किंचित्सांख्यागतं तच्च महामुनीन्द्राः ॥ १०६
समस्तदृष्टं परमं बलं च ज्ञानं च मोक्षश्च यथावदुक्तम् ।
तपांसि सूक्ष्माणि च यानि चैव सांख्ये यथावद्विहितानि विप्राः ॥ १०७
विपर्ययं तस्य हितं सदैव गच्छन्ति सांख्याः सततं सुखेन ।
तांश्चापि संधार्य ततः कृतार्थाः पतन्ति विप्राग्र्यतनेषु भूयः ॥ १०८
हित्वा च देहं प्रविशन्ति मोक्षं दिवौकसश्चापि च योगसांख्याः ।
अतोऽधिकं तेऽभिरता महार्हे सांख्ये द्विजा भो इह शिष्टजुष्टे ॥ १०९
तेषां तु तिर्यग्गमनं हि दृष्टं नाधो गतिः पापकृतां निवासः ।
न वा प्रधाना अपि ते द्विजातयो ये ज्ञानमेतन्मुनयो न सक्ताः ॥ ११०
सांख्यं विशालं परमं पुराणं महार्णवं विमलमुदारकान्तम् ।
कृत्स्नं हि सांख्या मुनयो महात्मनारायणे धारयताप्रमेयम् ॥ १११
एतन्मयोक्तं परमं हि तत्त्वं नारायणाद्विश्वमिदं पुराणम् ।
स सर्गकाले च करोति सर्गं संहारकाले च हरेत भूयः ॥ ११२

इति श्रीमहापुराणे आदिब्राह्मे व्यासऋषिसंवादे सांख्यविधिनिरूपणं नामैकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३४४९

---

अथ चत्वारिंशदधिकद्विशततमोऽध्यायः ।

मुनय ऊचुः—

किं तदक्षरमित्युक्तं यस्मान्नाऽऽवर्तते पुनः । किंस्वित्तत्क्षरमित्युक्तं यस्मादावर्तते पुनः ॥ १
अक्षराक्षरयोर्व्यक्तिं पृच्छामस्त्वां महामुने । उपलब्धुं मुनिश्रेष्ठ तत्त्वेन मुनिपुंगव ॥ २
त्वं हि ज्ञानविदां श्रेष्ठः प्रोच्यसे वेदपारगैः । ऋषिभिश्च महाभागैर्यतिभिश्च महात्मभिः ॥ ३
तदेतच्छ्रोतुमिच्छामस्त्वत्तः सर्वं महामते । न तृप्तिमधिगच्छामः शृण्वन्तोऽमृतमुत्तमम् ॥ ४

व्यास उवाच—

अत्र वो वर्णयिष्यामि इतिहासं पुरातनम् । वसिष्ठस्य च संवादं करालजनकस्य च ॥ ५
वसिष्ठं श्रेष्ठमासीनमृषीणां भास्करद्युतिम् । पप्रच्छ जनको राजा ज्ञानं नैःश्रेयसं परम् ॥ ६
परमात्मनि कुशलमध्यात्मगतिनिश्चयम् । मैत्रावरुणिमासीनमभिवाद्य कृताञ्जलिः ॥ ७

---

१ क. °यः । शमयुक्ता° । २ क. योगे । ३ क. °ख्याश्च जात° । ४ क. ख. °मेतं हि मु° । ५ ख. विप्रेषु यतान्ति भू° । ६ ग. सांख्या । ७ ग. च तदत्ति भू° ।

स्वच्छन्दं सुकृतं[1] चैव मधुरं चाप्यनुल्बणम् । पप्रच्छर्षिवरं राजा करालजनकः पुरा ॥ ८

करालजनक उवाच—

भगवञ्श्रोतुमिच्छामि परं ब्रह्म सनातनम् । यस्मिन्न पुनरावृत्तिं प्राप्नुवन्ति मनीषिणः ॥ ९

यच्च तत्क्षरमित्युक्तं यत्रेदं क्षरते जगत् । यच्चाक्षरमिति प्रोक्तं शिवं क्षेममनामयम् ॥ १०

वसिष्ठ उवाच—

श्रूयतां पृथिवीपाल क्षरतीदं यथा जगत् । यत्र क्षरति पूर्वेण यावत्कालेन चाप्यथ ॥ ११

युगं द्वादशसाहस्र्यं कल्पं विद्धि चतुर्युगम् । दशकल्पशतावर्तमहस्तद्ब्राह्ममुच्यते ॥ १२

रात्रिश्चैतावती राजन्यस्यान्ते प्रतिबुध्यते । सृजत्यनन्तकर्माणि महान्तं भूतमग्रजम् ॥ १३

मूर्तिमन्तममूर्तात्मा विश्वं शंभुः स्वयंभुवः । *यत्रोत्पत्तिं प्रवक्ष्यामि मूलतो नृपसत्तम ॥ १४

अणिमा लघिमा प्राप्तिरीशानं ज्योतिरव्ययम् । सर्वतःपाणिपादान्तं सर्वतोक्षिशिरोमुखम् ॥ १५

सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति । हिरण्यगर्भो भगवानेष बुद्धिरिति स्मृतिः[3] ॥ १६

महानिति च योगेषु [4]विरिञ्चिरिति चाप्यथ । सांख्ये च पठ्यते शास्त्रे नामभिर्बहुधात्मकः ॥ १७

विचित्ररूपो विश्वात्मा एकाक्षर इति स्मृतः । धृतमेकात्मकं येन कृत्स्नं त्रैलोक्यमात्मना ॥ १८

तथैव बहुरूपत्वाद्विश्वरूप इति श्रुतः । एष वै विक्रियापन्नः[5] सृजत्यात्मानमात्मना ॥ १९

†प्रधानं तस्य संयोगादुत्पन्नं सुमहत्पुरम् । अहंकारं महातेजाः[6] प्रजापतिनमस्कृतम्[7] ॥ २०

अव्यक्ताद्व्यक्तिमापन्नं[8] विद्यासर्गं वदन्ति तम् । महान्तं चाप्यहंकारमविद्यासर्गं एव च ॥ २१

अचरश्च चरश्चैव समुत्पन्नौ तथैकतः[9] । विद्याऽविद्येति विख्याते श्रुतिशास्त्रानुचिन्तकैः ॥ २२

भूतसर्गमहंकारात्तृतीयं विद्धि पार्थिव । अहंकारेषु नृपते चतुर्थं विद्धि वैकृतम् ॥ २३

वायुर्ज्योतिरथाऽऽकाशमापोऽथ पृथिवी तथा । शब्दस्पर्शौ च रूपं च रसो गन्धस्तथैव च ॥ २४

एवं युगपदुत्पन्नं दशवर्गमसंशयम् । पञ्चमं विद्धि राजेन्द्र भौतिकं सर्गमर्थकृत् ॥ २५

श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणमेव च पञ्चमम् । वाग्हस्तौ चैव पादौ च पायुर्मेढ्रं तथैव च ॥ २६

बुद्धीन्द्रियाणि चैतानि तथा कर्मेन्द्रियाणि च । संभूतानीह युगपन्मनसा सह पार्थिव ॥ २७

एषा तत्त्वचतुर्विंशा[10] सर्वाऽऽकृतिः[11] प्रवर्तते । यां ज्ञात्वा नाभिशोचन्ति ब्राह्मणास्तत्त्वदर्शिनः ॥ २८

एवमेतत्समुत्पन्नं त्रैलोक्यमिदमुत्तमम् । वेदितव्यं नरश्रेष्ठ सदैव नरकार्णवे[12] ॥ २९

सयक्षभूतगन्धर्वे सकिंनरमहोरगे । *सचारणपिशाचे वै सदेवर्षिनिशाचरे ॥ ३०

सदंशकीटमशके सपूतिकृमिमूषके । शुनि श्वपाके[13] चैणेये सचाण्डाले[14] सपुल्कसे ॥ ३१

हस्त्यश्वखरशार्दूले सवृके गवि चैव ह[15] । या च मूर्तिश्च यत्किंचित्सर्वत्रैतन्निदर्शनम् ॥ ३२

जले भुवि तथाऽऽकाशे नान्यत्रेति विनिश्चयः । स्थानं देहवतामासीदित्येवमनुशुश्रुम ॥ ३३

कृत्स्नमेतावतस्तात क्षरते व्यक्तसंज्ञकः[16] । अहन्यहनि भूतात्मा[17] यच्चाक्षर इति स्मृतम्[18] ॥ ३४

---

* इदमर्धं ग. पुस्तके नास्ति। † इदमर्धं क. ग. पुस्तकयोर्नास्ति। * इत आरभ्य गवि चैव हेत्यन्तं ख. पुस्तके नास्ति।

---

१ ग. सुक्षेत्रं । २ ग. प्रसृतं । ३ क. स्मृतः । ४ ग. विरञ्च इति । ५ ख. °यायत्नः स° । ६ ख. °तेजा जातस्तत्र प्रजापतिः । अ° । ७ ग. °तिमहत्कृत° । ८ क. ग. °व्यक्तमा° । ९ ख. °थैव च । वि° । १० क °र्षा प्रकृतिर्वर्ते° । ११ ग. °कृतिषु व° । १२ ख. °र्णवात् । स° । १३ क. °के कृपणे पशुचा° । १४ ख. °ण्डालपु° । १५ क. ह । यच्च मूर्तं च य° । १६ क. °संज्ञितम् । अ° । १७ ख. °त्मा तदक्षरमिति । १८ ग. °म् । एतदक्षर° ।

ततस्तत्क्षरमित्युक्तं क्षरतीदं यथा जगत्। जगन्मोहात्मकं चाऽऽहुरव्यक्तोऽव्यक्तसंज्ञकम् ॥ ३५
महांश्चैवाक्षरो नित्यमेतत्क्षरविवर्जनम्। कथितं ते महाराज यस्मान्नाऽऽवर्तते पुनः ॥ ३६
पञ्चविंशतिकोऽमूर्तः स नित्यस्तत्त्वसंज्ञकः। सत्त्वसंश्रयणात्तत्त्वं सत्त्वमाहुर्मनीषिणः ॥ ३७
यदमूर्तिः सृजद्व्यक्तं तन्मूर्तिमधितिष्ठति। चतुर्विंशतिमो व्यक्तो ह्यमूर्तिः पञ्चविंशकः ॥ ३८
स एव हृदि सर्वासु मूर्तिष्वातिष्ठताऽऽत्मवान्। चेतयंश्चेतनो नित्यं सर्वमूर्तिरमूर्तिमान् ॥ ३९
सर्गप्रलयधर्मेण स सर्गप्रलयात्मकः। गोचरे वर्तते नित्यं निर्गुणो गुणसंज्ञितः ॥ ४०
एवमेष महात्मा च सर्गप्रलयकोटिशः। विकुर्वाणः प्रकृतिमान्नाभिमन्येत बुद्धिमान् ॥ ४१
तमःसत्त्वरजोयुक्तस्तासु तास्विह योनिषु। लीयते प्रतिबुद्धत्वादबुद्धजनसेवनात् ॥ ४२
सहवासनिवासत्वाद्बालोऽहमिति मन्यते। योऽहं न सोऽहमित्युक्तो गुणानेवानुवर्तते ॥ ४३
तमसा तामसान्भावान्विविधान्प्रतिपद्यते। रजसा राजसांश्चैव सात्त्विकान्सत्त्वसंश्रयात् ॥ ४४
शुक्ललोहितकृष्णानि रूपाण्येतानि त्रीणि तु। सर्वाण्येतानि रूपाणि जानीहि प्राकृतानि तु॥४५
तामसा निरयं यान्ति राजसा मानुषानथ। सात्त्विका देवलोकाय गच्छन्ति सुखभागिनः॥४६
निष्केवलेन पापेन तिर्यग्योनिमवाप्नुयात्। पुण्यपापेषु मानुष्यं पुण्यमात्रेण देवताः ॥ ४७
एवमव्यक्तविषयं मोक्षमाहुर्मनीषिणः। पञ्चविंशतिमो योऽयं ज्ञानादेव प्रवर्तते ॥ ४८

इति श्रीमहापुराणे आदिब्राह्मे वसिष्ठकरालजनकसंवादे क्षराक्षरविचारनिरूपणं नाम चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३४९३

---

अथैकचत्वारिंशदधिकद्विशततमोऽध्यायः।

---

वसिष्ठ उवाच—

एवमप्रतिबुद्धत्वादबुद्धमनुवर्तते। देहाद्देहसहस्राणि तथा च न स भिद्यते ॥ १
तिर्यग्योनिसहस्रेषु कदाचिद्देवतास्वपि। उत्पद्यति तपोयोगाद्गुणैः सह गुणक्षयात् ॥ २
मानुष्यत्वाद्दिवं याति देवो मानुष्यमेति च। मानुष्यान्निरयस्थानमालयं प्रतिपद्यते ॥ ३
कोषकारो यथाऽऽत्मानं कीटः समभिरुन्धति। सूत्रतन्तुगुणैर्नित्यं तथाऽयमगुणो गुणैः ॥ ४
द्वन्द्वमेति च निर्द्वन्द्वस्तासु तास्विह योनिषु। शीर्षरोगेऽक्षिरोगे च दन्तशूले गलग्रहे ॥ ५
जलोदरेऽतिसारे च गण्डमालाविचर्चिके। श्वित्रकुष्ठेऽग्निदग्धे च सिध्मापस्मारयोरपि ॥ ६
यानि चान्यानि द्वंद्वानि प्राकृतानि शरीरिणाम्। उत्पद्यन्ते विचित्राणि तान्येवाऽऽत्माऽभिमन्यते ॥ ७
अभिमानातिमानानां तथैव सुकृतान्यपि। एकवासाश्चतुर्वासाः शायी नित्यमधस्तथा ॥ ८
मण्डूकशायी च तथा वीरासनगतस्तथा। वीरमासनमाकाशे तथा शयनमेव च ॥ ९

---

१ ग. ॰व्याव्यक्त॰। २ क. ग. ॰वाप्रजो नि॰। ३ ख. ग. ॰रनिदर्शन॰। ४ ख. ॰तिमो मू॰। ५ ग. विष्णोः। ६ क. ॰क्तो व्य॰। ७ ख. ॰न्। अचेताश्चे॰। ८ क. एष एव म॰। ९ क. ॰त्वात्तेनाह॰। ख. ॰त्वान्नान्योऽह॰। १० ग. प्रकृतानि। ११ ग. ॰यं क्षरमा॰। १२ ख. ॰त्वादबुद्धिरेव प्रव॰। १३ क. ॰ह युगक्ष॰। १४ ग. ॰मानुष्यं प्र॰। १५ ख. ॰भिगच्छति। १६ ख. ॰श्च दुर्वा॰।

इष्टकाप्रस्तरे चैव चक्रकप्रस्तरे तथा। भस्मप्रस्तरशायी च भूमिशय्यानुलेपनः ॥ १०
वीरस्थानाम्बुपाके च शयनं फलकेषु च। विविधासु च शय्यासु फलगृद्धान्वितासु च ॥ ११
उद्याने खललग्ने तु क्षौमकृष्णाजिनान्वितैः। मणिवालपरीधानो व्याघ्रचर्मपरिच्छदः ॥ १२
सिंहचर्मपरीधानः पट्टवासास्तथैव च। फलकं (?) परिधानश्च तथा कटकवस्त्रधृक् ॥ १३
कटैकवसनश्चैव चीरवासास्तथैव च। वस्त्राणि चान्यानि बहून्यभिमत्य च बुद्धिमान् ॥ १४
भोजनानि विचित्राणि रत्नानि विविधानि च। एकरात्रान्तराशित्वमेककालिकभोजनम् ॥ १५
चतुर्थाष्टमकालं च षष्ठकालिकमेव च। षड्रात्रभोजनश्चैव तथा चाष्टाहभोजनः ॥ १६
मासोपवासी मूलाशी फलाहारस्तथैव च। वायुभक्षश्च पिण्याकदधिगोमयभोजनः ॥ १७
गोमूत्रभोजनश्चैव काशपुष्पाशनस्तथा। शैवलभोजनश्चैव तथा चान्येन वर्तयन् ॥ १८
वर्तयञ्शीर्णपर्णैश्च प्रकीर्णफलभोजनः। विविधानि च कृच्छ्राणि सेवते सिद्धिकाङ्क्षया ॥ १९
चान्द्रायणानि विधिवल्लिङ्गानि विविधानि च। चातुराश्रम्ययुक्तानि धर्माधर्माश्रयाण्यपि ॥ २०
उपाश्रयानप्यपरान्पाखण्डान्विविधानपि। विविक्ताश्च शिलाछायास्तथा प्रस्रवणानि च ॥ २१
पुलिनानि विविक्तानि विविधानि वनानि च। काननेषु विविक्ताश्च शैलानां महतीर्गुहाः ॥ २२
नियमान्विविधांश्चापि विविधानि तपांसि च। यज्ञांश्च विविधाकारान्विद्याश्च विविधास्तथा २३
वणिक्पथं द्विजक्षत्रवैश्यशूद्रांस्तथैव च। दानं च विविधाकारं दीनान्धकृपणादिषु ॥ २४
अभिमन्येत संधातुं तथैव विविधान्गुणान्। सत्त्वं रजस्तमश्चैव धर्मार्थौ काम एव च ॥ २५
प्रकृत्याऽऽत्मानमेवाऽऽत्मा एवं प्रविभजंत्युत। स्वाहाकारवषट्कारौ स्वधाकारनमस्क्रिये ॥ २६
यजनाध्ययने दानं तथैवाऽऽहुः प्रतिग्रहम्। याजनाध्यापने चैव तथाऽन्यदपि किंचन ॥ २७
जन्ममृत्युविधानेन तथा विशसनेन च। शुभाशुभमयं सर्वमेतदाहुः [११]सनातनम् ॥ २८
प्रकृतिः कुरुते देवी भयं प्रलयमेव च। दिवसान्ते गुणानेतानतीत्यैकोऽवतिष्ठते ॥ २९
रश्मिजालमिवाऽऽदित्यस्तत्कालं संनियच्छति। एवमेवैष तत्सर्वं क्रीडार्थमभिमन्यते ॥ ३०
आत्मरूपगुणानेतान्विविधान्हृदयप्रियान्। एवमेतां प्रकुर्वाणः सर्गप्रलयधर्मिणीम् ॥ ३१
क्रियां क्रियापथे रक्तस्त्रिगुणस्त्रिगुणाधिपः। क्रियाक्रियापथोपेतस्तथा तदिति मन्यते ॥ ३२
प्रकृत्या सर्वमेवेदं जगदन्धीकृतं विभो। रजसा तमसा चैव व्याप्तं सर्वमनेकधा ॥ ३३
एवं द्वंद्वान्यतीतानि मम वर्तन्ति नित्यशः। मत्त एतानि जायन्ते प्रलये यान्ति मामपि ॥ ३४
निस्तर्तव्याण्यथैतानि सर्वाणीति नराधिप। मन्यते पक्षबुद्धित्वात्तथैव सुकृतान्यपि ॥ ३५
भोक्तव्यानि ममैतानि देवलोकगतेन वै। इहैव चैनं भोक्ष्या[१२]मि शुभाशुभफलोदयम् ॥ ३६
सुखमेवं तु कर्तव्यं सकृत्कृत्वा सुखं मम। यावदेव तु मे सौख्यं जात्यां जात्यां भविष्यति ३७
भविष्यति न मे दुःखं कृतेनेहाप्यनन्तकम्। सुख[१३]दुःखं हि मानुष्यं निरये चापि मज्जनम् ॥ ३८
निरयाच्चापि मानुष्यं कालेनैष्याम्यहं पुनः। मनुष्यत्वाच्च देवत्वं देवत्वात्पौरुषं पुनः ॥ ३९
मनुष्यत्वाच्च [१४]निरयं पर्यायेणोपगच्छ[१५]ति। एष एवं द्विजातीनामात्मा वै स गुणैर्वृतः ॥ ४०

---

१ क. °व कुशस्य प्र°। २ ग. °तः। शालिवानप°। ३ ख. पटत्रा°। ४ ख. तथोदकसुव°। ५ ख. °कालश्च ष°। ६ ख °भक्षोऽम्बुपि°। ७ क. °नि वर्णधर्माश्र°। ८ क. °मन्य तु सं°। ख. °मन्यवसं°। ९ क. च। स कृत्वाऽऽत्मा°। १० क ख. °त्पुनः। स्वा°। ११ ख. ग. क्रियापथम्। १२ क. °मि पापपुण्यफ°। १३ ग. °दुःखे हि। १४ क. नरकं १५ ग. °ति। य एवं वेत्ति नित्यं वै निरात्माऽऽत्मगु°।

तेन देवमनुष्येषु निरयं चोपपद्यते । ममत्वेनाऽऽवृतो नित्यं तत्रैव परिवर्तते ॥ ४१
सर्गकोटिसहस्राणि मरणान्तासु मूर्तिषु । य एवं कुरुते कर्म शुभाशुभफलात्मकम् ॥ ४२
स एवं फलमाप्नोति त्रिषु लोकेषु मूर्तिमान् । प्रकृतिः कुरुते कर्म शुभाशुभफलात्मकम् ॥ ४३
प्रकृतिश्च तथाऽऽप्नोति त्रिषु लोकेषु कामगा । तिर्यग्योनिमनुष्यत्वे देवलोके तथैव च ॥ ४४
त्रीणि स्थानानि चैतानि जानीयात्प्राकृतानि ह । अलिङ्गप्रकृतित्वाच्च लिङ्गैरप्यनुमीयते ॥ ४५
तथैव पौरुषं लिङ्गमनुमानाद्धि मन्यते । स लिङ्गान्तरमासाद्य प्राकृतं लिङ्गमव्रणम् ॥ ४६
व्रणद्वाराण्यधिष्ठाय कर्माण्यात्मनि मन्यते । श्रोत्रादीनि तु सर्वाणि पञ्च कर्मेन्द्रियाण्यथ ॥ ४७
रागादीनि प्रवर्तन्ते गुणेष्विह गुणैः सह । अहमेतानि वै कुर्वन्ममैतानीन्द्रियाणि ह ॥ ४८
निरिन्द्रियो हि मन्येत व्रणवानस्मि निर्व्रणः । अलिङ्गो लिङ्गमात्मानमकालं कालमात्मनः ॥ ४९
असत्त्वं सत्त्वमात्मानममृतं मृतमात्मनः । अमृत्युं मृत्युमात्मानमचरं चरमात्मनः ॥ ५०
अक्षेत्रं क्षेत्रमात्मानमसङ्गं सङ्गमात्मनः । अतत्त्वं तत्त्वमात्मानमभवं भवमात्मनः ॥ ५१
अक्षरं क्षरमात्मानमबुद्धत्वाद्धि मन्यते । एवमप्रतिबुद्धत्वादबुद्धजनसेवनात् ॥ ५२
सर्गकोटिसहस्राणि पतनान्तानि गच्छति[3] । जन्मान्तरसहस्राणि मरणान्तानि गच्छति ॥ ५३
तिर्यग्योनिमनुष्यत्वे देवलोके तथैव च । चन्द्रमा इव कोशानां पुनस्तत्र सहस्रशः ॥ ५४
नीयतेऽप्रतिबुद्धत्वादेवमेव कुबुद्धिमान् । कला पञ्चदशी योनिस्तद्धाम इति पठ्यते ॥ ५५
नित्यमेव विजानीहि सोमं वै षोडशांशकैः । कलया जायतेऽजस्रं पुनः पुनरबुद्धिमान् ॥ ५६
धीमांश्चायं न भवति नृप एवं हि जायते । षोडशी तु कला सूक्ष्मा स सोम उपधार्यताम् ॥ ५७
ने तूपयुज्यते देवैर्देवानपि युनक्ति सः । ममत्वं क्षपयित्वा तु जायते नृपसत्तम ॥
प्रकृतेस्त्रिगुणायास्तु स एव त्रिगुणो भवेत् ॥

इति श्रीमहापुराणे आदिब्राह्मे वसिष्ठकरालजनकसंवादे एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३५५१

---

अथ द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

जनक उवाच—

अक्षरक्षरयोरेष द्वयोः संबन्ध इष्यते । स्त्रीपुंसयोर्वा संबन्धः स वै पुरुष उच्यते ॥ १
ऋते तु पुरुषं नेह स्त्री गर्भान्धारयत्युत । ऋते स्त्रियं न पुरुषो रूपं निर्वर्तते तथा ॥ २
अन्योन्यस्याभिसंबन्धादन्योन्यगुणसंश्रयात् । रूपं निर्वर्तयेदेतदेवं सर्वासु योनिषु ॥ ३
रत्यर्थमतिसंयोगादन्योन्यगुणसंश्रयात् । ऋतौ निर्वर्तते रूपं तद्वक्ष्यामि निदर्शनम् ॥ ४

---

१ ख. °मू । प्राणान्द्वारा° । २ क. ग. कर्मणाऽऽत्म° । ३ ग °ति । धाम्ना धामस° । ४ क. लोकानां । ५ ग. कलाः । ६ ख. ग. इव । ७ ख. पद्यते । ८ ख. ग. °मेतद्द्विजा° । ९ क. °दशात्मकम् । क° । ग. °दशीं कलाम् । क° । १० क. कला पञ्चदशी तेजस्ते पुनश्च कुबु° । ११ ग. °न् । धाम तस्योपयुञ्जन्ति भूय एव तु जा° । १२ क. न भूयश्चेज्य° । १३ ग. द्विगुणो । १४ ग. °योर्भगवन्संबन्धस्तु तदुच्य° । १५ क. °पं प्रतिनिवर्तते । अ° । १६ ख. °षु । गत्यर्थानभिसं° ।

ये गुणाः पुरुषस्येह ये च मातुर्गुणास्तथा। अस्थि स्नायु च मज्जा च जानीमः पितृतो द्विज॥५
त्वङ्मांसशोणितं चेति मातृजान्यनुशुश्रुम। एवमेतद्द्विजश्रेष्ठ वेदशास्त्रेषु पठ्यते॥ ६
प्रमाणं यच्च वेदोक्तं शास्त्रोक्तं यच्च पठ्यते। वेदशास्त्रप्रमाणं च प्रमाणं तत्सनातनम्॥ ७
एवमेवाभिसंबन्धौ नित्यं प्रकृतिपूरुषौ। यच्चापि भगवंस्तस्मान्मोक्षधर्मो न विद्यते॥ ८
अथवाऽनन्तरकृतं किंचिदेव निदर्शनम्। तन्ममाऽऽचक्ष्व तत्त्वेन प्रत्यक्षो ह्यसि सर्वदा॥ ९
मोक्षकामा वयं चापि काङ्क्षामो यदनामयम्। अजेयमजरं नित्यमतीन्द्रियमनीश्वरम्॥ १०

वसिष्ठ उवाच—

यदेतदुक्तं भवता वेदशास्त्रनिदर्शनम्। एवमेतद्यथार्थो वक्ष्ये तत्त्वग्राही यथा भवान्॥ ११
धार्यते हि त्वया ग्रन्थ उभयोर्वेदशास्त्रयोः। न च ग्रन्थस्य तत्त्वज्ञो यथातत्त्वं नरेश्वर॥ १२
यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः। न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा॥ १३
भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः। यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा॥१४
ग्रन्थस्यार्थं स पृष्टस्तु मादृशो वक्तुमर्हति। यथातत्त्वाभिगमनादर्थं तस्य स विन्दति॥ १५
न यः समुत्सुकः कश्चिद्ग्रन्थार्थं स्थूलबुद्धिमान्। स कथं मन्दविज्ञानो ग्रन्थं वक्ष्यति निर्णयात्॥
*अज्ञात्वा ग्रन्थतत्त्वानि वादं यः कुरुते नरः। लोभाद्वाऽप्यथवा दम्भात्स पापी नरकं व्रजेत्॥
निर्णयं चापि च्छिद्रात्मा न तद्वक्ष्यति तत्त्वतः। सोऽपीहास्यार्थतत्त्वज्ञो यस्मान्नैवाऽऽत्मवानपि॥
तस्मात्त्वं शृणु राजेन्द्र यथैतदनुदृश्यते। यथा तत्त्वेन सांख्येषु योगेषु च महात्मसु॥ १९
यदेव योगाः पश्यन्ति सांख्यं तदनुगम्यते। एकं सांख्यं च योगं च यः पश्यति स बुद्धिमान्
त्वङ्मांसं रुधिरं मेदः पित्तं मज्जाऽस्थि स्नायु च। एतदैन्द्रियकं तात यद्भवानित्थमात्थ माम्॥
द्रव्याद्द्रव्यस्य निर्वृत्तिरिन्द्रियादिन्द्रियं तथा। देहाद्देहमवाप्नोति बीजाद्बीजं तथैव च॥ २२
निरिन्द्रियस्य बीजस्य निर्द्रव्यस्यापि देहिनः। कथं गुणा भविष्यन्ति निर्गुणत्वान्महात्मनः २३
गुणा गुणेषु जायन्ते तत्रैव विरमन्ति च। एवं गुणाः प्रकृतिजा जायन्ते न च यान्ति च॥ २४
त्वङ्मांसं रुधिरं मेदः पित्तं मज्जाऽस्थि स्नायु च। अष्टौ तान्यथ शुक्रेण जानीहि प्राकृतेन वै॥
पुमांश्चैवापुमांश्चैव त्रीलिङ्गं प्राकृतं स्मृतम्। वायुरेष पुमांश्चैव रस इत्यभिधीयते॥ २६
अलिङ्गा प्रकृतिर्लिङ्गैरुपलभ्यति साऽऽत्मजैः। यथा पुष्पफलैर्नित्यं+ मूर्तं चामूर्तयस्तथा॥ २७
एवमप्यनुमानेन स लिङ्गमुपलभ्यते। पञ्चविंशतिकस्तात लिङ्गेषु नियतात्मकः॥ २८
अनादिनिधनोऽनन्तः सर्वदर्शनकेवलः। केवलं त्वभिमानित्वाद्गुणेषु गुण उच्यते॥ २९
गुणा गुणवतः सन्ति निर्गुणस्य कुतो गुणाः। तस्मादेवं विजानन्ति ये जना गुणदर्शिनः॥ ३०
यदा त्वेष गुणानेतान्प्राकृतानभिमन्यते। तदा स गुणवानेव गुणभेदान्प्रपश्यति॥ ३१
यत्तद्बुद्धेः परं प्राहुः सांख्ययोगं च सर्वशः। बुध्यमानं महाप्राज्ञाः प्रबुद्धपरिवर्जनात्॥ ३२

* अयं श्लोको ग. पुस्तके नास्ति। + इत आरभ्याग्रे 'प्रकृतिं प्रसवात्मिकाम्' इत्येतत्पर्यन्तं त्रुटितं ख. पुस्तके।

१ क. च याति नः पि°। २ ग. °धर्मोन्न वि°। ३ क. अन्यद्वाऽन°। ४ क. °था तद्वै जन्म गृह्णाति चेतनः। धा°। ग. °था तद्वै तत्त्वं गृह्णाद्यथा। ५ क. ह्यर्थ। ६ क. °ते। याथालध्येन। ७ ग. सांख्यैस्तदभिकथ्यते। ८ क. जायन्ते। ९ क. ख. शुभम्। १० क. रेत। ११ क. °ङ्गि उप°। १२ ग. °ति चाऽऽत्म°। १३ ग. °त्मकम्। अ°। १४ ग. °वलम्। के°। १५ क. °लं बलवानीशगुणे°। १६ क. °गुणेषु कु°। १७ ग. °व परमेनावप°। १८ ग. °शः। नर प्रबुद्धिमान्महाप्राज्ञः प्र°।

